प्रतिकूले विधौ बन्धुरप्यरातीयतेतराम् ।
अनुकूले पुनर्वैरिजनोऽपि सुजनायते ॥ ९ ॥

**नटी**—अज्ज ! सच्चं ज्जेव एद, तह वि सिणेहपरदा मं किलेसयदि ।[1]

**सूत्रधारः**—प्रिये ! सकललोकसंवादी खल्वसावपत्यस्नेहानुभव । तथाहि—

नवपरिणीता दुहिता गच्छन्ती पतिगृहाय बन्धूनाम् ।
परमार्थवेदिनामपि वैक्लव्य विरचयत्येव ॥ १० ॥

(नेपथ्ये)

साधु भो भरतावतस ! साधु, ("नवपरिणीते"त्यादि पठति ।)

**सूत्रधारः**—प्रिये ! कथमय शतानन्दमुमिकाया वत्सरङ्गमङ्गलो व्याहरति ? । तदेष्वानामप्यनन्तरकरणीयाय सज्जीभवाव । (इति निष्क्रान्तौ ।)

## ॥ [1]प्रस्तावना ॥

(तत प्रविशति शतानन्द ।)

**शतानन्दः**—साधु भो भरतावतस ! साधूक्त भवता ("नवपरिणीता" इत्यादि पठित्वा ।) यदद्य महाराजश्रीसी[2]रध्वज सीताप्रस्थानजनितोन्मनीभाव सासारिकस्नेहापहरणो दुर्वचनचूर्णानि भगवतो याज्ञवल्क्यस्यापि वचनानि नाथ संस्मरति ।

रामेण स्थाणुचाप सपदि दलितमित्युल्लसद्विस्मयश्री,
सम्बन्ध सैष गोत्रे समजनि तपनस्येति सन्तोषशालम् ।
सीता गन्ताऽद्य भर्तुर्भवनमिति पुनर्वैमनस्येन मुह्यन्,
न ह्यन्त स्नेहबन्ध श्लथयति मिथिलेन्द्रोऽपि योगीन्द्र[3]शिष्य ॥११॥

(पुन स्मृत्वा सचमत्कारम्) अहो ! निरुपम कोऽपि दिलीपकुलकाननकेसरीन्द्रे रामभद्रे सर्वजनानामनुरागातिरेक । तथाहि—

यष्टङ्कारस्त्रिनयनधनुर्दण्डत श्लाघ्यमानात्,
प्रादुर्भूतेन स्थगितनिखिलाशान्तगर्भस्तदाऽऽसीत् ।

१ आर्य ! सत्यमेवैतत्, तथापि स्नेहपरता मां क्लेशयति ।

---

1 प्रस्तावना अ पवात्रप्रवरा । 2 जनकराज । याज्ञवल्क्यशिष्योऽपि ।

सोऽप्युच्चैस्तच्चरितरचितानन्दनृत्यत्रिलोकी-
कॢप्तश्लाघाकलकलतिरोभूतभूमा बभूव ॥ १२ ॥

(पुनः पृथ्वीं प्रति)

कौशिल्यया तदिदमुद्धृतविश्वशल्यं,
यदर्पितं कृपणया नृपरत्नमेकम्।
तत् किं न देवि वसुधे! त्वमपीदृगन्य-
दाविष्करोति(ऽपि)? भवती ननु भूरिरत्ना ॥ १३ ॥

(आकाशे)

मा मैवं महर्षे गौतमात्मज!

एकं कौशल्यया रामनाम रत्नमसूयत।
सीतासंज्ञं मयाऽप्येतद् द्वितीयमुपदीकृतम् ॥ १४ ॥

**शतानन्दः**—(ऊर्ध्वमवलोक्य) भगवति वसुन्धरे! स्थाने वयमविमृश्यवादिनो भवत्या निवारिताः। (पुरो विलोक्य) अये! कथमयं मिथिलाधिनाथः समर्थितविवाहमहोत्सवं दशरथप्रमुखसम्बन्धिजनमनुव्रज्य वत्सां जानकीं जननीजनवन्दनार्थमन्तःपुरगतामागच्छन्तीं प्रतिपालयन्निहैव विवाहमण्डपतले वत्सौ राम-लक्ष्मणावापृच्छ्यमानावभिभाषमाणो वर्तते! तदितो गच्छामि (इति परिक्रामति।)

(ततः प्रविशन्ति जनकः प्रतीहारो राम-लक्ष्मणौ च।)

**रामः**—(सविनयमञ्जलिं बद्ध्वा जनकं प्रति) अनुजानन्तु तत्रभवन्तो मामयोध्यागमनाय।

**जनकः**—(विचिन्त्य सोत्कण्ठम्) वत्स! बाढं मूढोऽस्मि प्रतिवचनदाने। यतः—

त्वद्दर्शनातृप्तविलोचनस्य, गच्छेति निर्गच्छति किं मुखान्मे?।
यात्राक्षणेऽस्मिन्नथ च त्वदीये, तिष्ठेति वाचोऽनुचितैव वृत्तिः ॥ १५ ॥

**रामः**—(सप्रश्रयम्)

वात्सल्यं तातपादानां भूतग्रामे निसर्गजम्।
जने पुनरिहापत्यनिर्विशेषे विशेषतः ॥ १६ ॥

(नेपथ्ये)

कुमार रामभद्र ! समादिशति महाराजो दशरथ, यदय प्रगुणीकृत प्रास्थानिको रथ । तद् वध्वा सीरध्वजसम्भूतया सह सत्वरमागम्यताम् ।

**जनकः**—( श्रुत्वा ) वत्स रामभद्र ! स्थित्वाऽपि चिरमस्माभिरनुभवनीय एव भवत्प्रवासजन्मा रणरणक, तत् कृतमत पर विलम्बेन । अपि च—

नरपतिरितरोऽपि स्मर्यते वैष्णवोंऽश,
स्वयमसि रमणीयैस्त्व गुणैर्विष्णुरेव ।
किमपि भुवनकार्यं यद् विचिन्त्याऽवतीर्ण-
स्तदिह घटयतस्ते वत्स ! निर्विघ्नमस्तु ॥ १७ ॥

**लक्ष्मणः**—तात ! भवदनुग्रहादेव भविष्यति ।

( इति उभौ परिक्रम्य निष्क्रान्तौ । )

**शतानन्दः**—( उपसृत्य ) स्वस्ति भवते भास्करप्रशिष्याय ।

**जनकः**—भगवन्नाङ्गिरस ! अभिवादये ( इति प्रणम्य प्रतीहार प्रति ) मित्रानन्दिन् ! समाहूयता वत्सा वैदेही । सोऽयमतिक्रामति प्रस्थानमुहूर्त्त । वयमपि पुरोहितसहिता शान्तिकगृहमुपेत्य प्रयाणप्रवणा वत्सा वैदेहीं प्रणमयितुमुद्बोधयामो भगवन्तमुपर्बुधम्। ( इति तथाकुरुत । )

**प्रतीहारः**—यदादिशति देव । ( इति पदान्तरे स्थित्वा व्यावृत्त्य च ) देव ! इय जानकी हसिकया समेत एवाभिवर्त्तते ।

( तत प्रविशति कञ्चुकिना निर्दिश्यमानमार्गा कृतप्रस्थानोचितमङ्गला सीता हसिका च । )

**सीता**—( बाष्पमुत्सृज्य ) हला हसिए ! अज्ज णियबन्धुवग्गेण विजुज्जमाणाए मह हियए बाढमरदी चिट्ठदि ।

**हसिका**—सहि जाणए ! महारायदसरहस्स देवीए कोसल्लाए पसाददाणेण

१ सखि हसिके ! अद्य निजबन्धुवर्गेण वियुज्यमानाया मम हृदय भृशमरतिस्तिष्ठति ।

२ सखि जानकि ! महाराजदशरथस्य देव्या कौशल्याया प्रसाददानेन तस्य च सर्वाङ्गसुन्दरस्य परमेश्वरशरासनभञ्जनजनस्य स्नेहानुभवेन सर्वं सुखावह भवती भविष्यति ।

1 सीतया । 2 जनकाय । 3 शतानन्द ! । 4 अग्निम् ।

तस्स य सअ्अगसुन्दरस्स परमेसरसरासणभजणजणस्स सिणेहाणुहवेण सव्व सुहावह मोदीए भविस्सदि ।

**सीता**—सहि[1] तस्सिं कोअण्डखण्डणक्खणे तुममवि हिट्ठिदा आसण्णुपविसिय हिययच्छिय ' भट्टिदारिए ! ' मा[ मा ]मनेसि ।

**हंसिका**—तस्सिं भग्गसरासणे भग्गे सपुण्णो पियसहीए मणोरह त्ति सरहस्स मह वद्धावयतीए सय ज्येव तुए एद पारितोसिकं दिण्णं । ( इत्यङ्गुलीयकं दर्शयति । )

**सीता**–( सवैलक्ष्यम् ) सहि[3] पत्थाणपय्याउलदाए निसुमरिय म्हि ।

**कञ्चुकी**—भर्तृदारिके ! सोऽयं महाराजसीरध्वज शान्तिकशालाया प्रकाशित हुताशन पुरत एवाभिवर्त्तते, तदितो गच्छाम इति ।

( सर्वे तथाकुर्वन्ति )

**जनकः**—(सीता प्रति ) वैदेहि ! वत्से ! प्रदक्षिणीकृत्य प्रणम्यतां भगवानाशुशुक्षणि, अनन्तरमय च कुलगुरुर्गौतमतनूज ।

( सीता तथाकरोति । )

**शतानन्दः**—

वत्से ! भव श्वशुरयो प्रमदप्रदा त्व,
तातान्वयस्य यशसे भव निर्मलस्य ।
प्राणप्रिया च भव भर्तुरनन्यजाते
पुत्रप्रसूर्भव, भव प्रथमा सतीषु ॥ १८ ॥

**जनकः**—( सविनयमञ्जलिं बद्ध्वा वैश्वानर प्रति )
स्वामिन् ! मुख मखभुजामसि मानवाना
मन्तर्गतोऽसि जगतोऽप्यसि वृत्तवेदी ।
सेय सुता मम नमस्यति तुभ्यमग्ने !,
पाता पिता च पविता भविता तदस्या ॥ १९ ॥

---

१ सखि ! तस्मिन् कोदण्डखण्डनक्षणे त्वमपि हृष्टा आसन्ने उपाविश्य हृदयेप्सित ' भर्तृदारिके ! ' [ इति ] मामामन्त्रय ।

२ तस्मिन् भग्नशरासने भग्ने सम्पूर्ण प्रियसख्या मनोरथ इति सरहस्य मह्य वर्धापयन्त्यै स्वय एव त्वया एतत् पारितोषिक दत्तम् ।

३ सखि ! प्रस्थानपर्याकुलतया विस्मृता अस्मि ।

**सीता**—( जनकं प्रणम्य ) तात[1] गच्छामि । ( इति रोदिति । )

**जनकः**—( शतानन्दं प्रति ) आर्य ! जानकीमेवंविधामवलोक्यतामस्माकं पुनः प्रत्यागतमिव ममत्वासङ्गेन । पश्य—

महतीमप्यतिक्रम्य प्रत्याहारनियन्त्रणाम् ।
अधुना सीतया सार्द्धं गन्तुमिच्छति मे मनः ॥ २० ॥

**शतानन्दः**—महाराज ! निर्गुणेऽप्यपत्ये स्निह्यन्ति गुरवः, किं पुनरेवंविधे ? । (पुनः सीतां प्रति ) वत्से जानकि ! न खलु भवती स्वभावतः शीलवती परिशिक्षामपेक्षते, तथापि गुरुत्वादस्माभिरभिधीयसे—

शुश्रूषा श्वशुरे, ननान्दृषु नतिः, श्वश्रूषु सेवाञ्जलिः,
पत्यौ तत्परता, सनर्म च वचस्तस्मिन्नवर्गे शुचौ ।
साङ्गत्यं कुलबालिकासु, विनयः पूज्ये, तनौ संवृति-
र्मार्गोऽयं मुनिपुङ्गवैर्मृगदृशां श्रेयःश्रिये दर्शितः ॥ २१ ॥

( सीता लज्जावनता तिष्ठति । )

**जनकः**—वत्से ! यदभिधातव्यं तदभिहितमेव गौतमात्मजेन ।

**कञ्चुकी**—( जनकं प्रति सविनयम् ) देव ! विज्ञापयन्ति देव्यः—यदयं जामाता रामभद्रो राक्षसैः सहजकृतविरोधः, मायाविनश्च राक्षसाः, तदस्य मार्गे तदन्तरायनिवारणाय प्रतिविधातव्यं देवेन ।

**शतानन्दः**—(विचिन्त्य) न केवलं राक्षसाः किन्तु राक्षसजातिरक्षाधिकारी दशकन्धरः प्रतिविधातव्यः । यतः किल—

लङ्केन्द्रः स नवीननीरपदवीरम्यो न गम्यो गिराः,
यस्मिन् जुह्वति चन्द्रहासदलितान् मौलीन् पुरारेः पुरः ।
भीत्या मन्दशिखोदयोऽपि दहनः स्वैरेव तत्र क्षणं,
प्राणद्भिः स्वशिरःश्रिया तनुतनु श्वासानिलैर्दीपितः ॥ २२ ॥

**प्रतीहारः**—(सचमत्कारम्) किमुच्यते ? मानधनानां धौरेयः स राक्षसचक्रवर्ती । तथाहि—

---

१ तात ! गच्छामि ।

शौर्यश्रीनजगत्त्रयाधिपतिनाचिह्नं प्रमत्ते प्रभौ,
राजद्भिस्तिलक शिरोभिरपरैश्छिन्नप्ररूढैर्धृनम् ।
अच्छिन्ने ननु मानिनोऽस्य न दधे मूर्ध्नाऽपरोपार्जित-
श्रीसम्भोगपराङ्मुखेन चतुर्भिस्तेषा प्रभूतेऽपि ॥ २३ ॥

**जनकः**—( कञ्चुकिन प्रति ) हरिदत्त ! किमस्माभिरिह प्रतिविधातव्यम् ? । पश्य—

बालोऽपि प्रसभ निनाय विलय य क्रीडया ताडका,
चक्रे दूरमुदस्तमस्तकतया राहु सुबाहु च य ।
य कोदण्डमखण्डयत्स्मरारिपोन तु निहन्तु स्थित,
काकुत्स्थोऽस्ति स एव, सम्प्रति पुन सन्यस्तशङ्का वयम् ॥२४॥

तद् भवताऽपि वत्साभनोविनोदाय कियदपि गत्वा सत्वरमिहाऽऽगन्तव्यम् ।

**सीता**—( पदान्तरे स्थित्वा पुनर्निवृत्य जनक प्रति ) ताद ! न विसुमरणीय म्हि । (इति नाट्य विसृजति ।)

**जनकः**—( सगद्गद सीताया अश्रुमुन्नमय्य ) अयि वत्से ! किमिद प्रार्थितवती भवती ? । यत —

अविभाजिनो जनन्या स्नेहो मय्येव तात ! कस्तद्वत् ।
अन्यत्र कृतविवेकैर्ममाऽपि त्वामुपाश्रित स्नेह ॥ २५ ॥

अपर च पतिव्रताना रहस्यमिदमुपदिश्यते—

सम्पदि वा विपत्तौ वा वने वा भवनेऽपि वा ।
भर्तारमनुवर्तन्ते निर्विकल्पा कुलस्त्रिय ॥ २६ ॥

( सीता जनक प्रणम्य हसिका-कञ्चुकिभ्या सह निष्क्रान्ता । )

**जनकः**—( शतानन्द प्रति ) आर्य ! प्रस्थिता जानकी । तद् वयमपि विलासमण्डपतले समुपविश्य हरिदत्तागमन प्रतिपालयाम । ( इत्युत्थाय तथाकुर्वन्ति । )

**जनकः**—( समन्तादवलोक्य सोत्कण्ठम् ) भगवन् ! गौतमस्यतनय !

---

१ तात ! न विस्मरणीयाऽस्मि ।

---

1 °कस्तवत् द० । 2 °मापि वम समुपाश्रितम् भा० । 3 °र नौतमस्य भा० । गौतमस्यतनय शतानन्द !

सौधं तदेव, नगरं च तदेव, वस्तु-
जातं तदेव च, तदेव दिनस्वरूपम् ।
सीताप्रवासनिरसीकृतचित्तवृत्ते
रन्यादृशं तदखिलं प्रतिभाति मेऽद्य ॥ २७ ॥

**शतानन्दः**—अस्माकमपि । ( पुनरात्मगतम् ) वैदेहीप्रवासवैमनस्येन सुतरां परिक्लिश्यते मिथिलेश्वर, तदिदानीं वार्त्तान्तरविनोदेन प्रमोदयामि । ( इति तावन्मण्डपमवलोक्य प्रकाशं जनकं प्रति ) हे सूर्यशिष्यान्तेवासिन् ! स्मरसि तदानीं जानकीविवाहविहितशोभाविभूतेरस्य मण्डपस्य ? । तथाहि—

रुन्धं तैर्नयनोत्पलद्वयफलं यैरेव दृष्टस्तदा,
मार्त्तण्डान्वयसम्भवक्षितिधरश्रीमण्डितो मण्डपः ।
[1]सूक्तान् [2]यत्र पपाठ सम्मदमिलत्कण्ठो वशिष्ठो मुनि-
र्गेयान्युद्वहनोचितानि च जगौ हर्षोद्धताऽरुन्धती ॥ २८ ॥

**जनकः**—आर्य ! तत्र किं परिहीयते ? यत्र भगवान् विश्वामित्रः स्वयं कार्यकर्त्ता भवति । यः किल—

[3]यद् वन्द्यं जगतीभुजां, भगवतः प्रद्योतनस्यापि [4]यद्
दुष्प्रापं, निजतेजसा न तृपितः क्षात्रेण तेनापि यः ।
ब्राह्मण्याय स्पृहयाञ्चकार महसे, तच्चापि जन्मन्यगा-
[5]दस्मिन्नेव, मुनीश्वराय [6]कुशिकापत्याय तस्मै नमः ॥ २९ ॥

**शतानन्दः**—विदेहाधि[7]पते ! महर्षेरप्यस्य गुरुषु गुरुतरं दाक्षिण्यम् । यतः—

राजाऽसि, प्रथमा तवैव गणना धर्मव्यवस्थाविदाम्,
आसंसारमिहापरो न सृजते कर्त्ता विरिञ्चिं विना ।
तत् कर्त्तुं समयव्यतिक्रममिमं नेवार्हसीत्यादराद् ,
देवेन्द्रेण निवारितो निववृते यः सर्गमार्गान्तरात् ॥ ३० ॥

**प्रतीहारः**—देव ! तदेतदपि महामुनेरस्य माहात्म्यमवधार्यताम् ।

---

1 ऋग्वेदसम्बन्धिनो मन्त्रान् । 2 मण्डपे । 3 4 यत् क्षात्रं तेन । 5 अस्मिन्नेव जन्मनि प्राप्तवान् । 6 कौशिकाय विश्वामित्राय तुभ्यं नमः । 7 'पते महर्षे ! मह' भा० ।

नरदेवोऽपि भूदेवो भवन्नुचैस्तपोमिना ।
स्वदेहस्य सुवर्णस्य [1]वर्णोत्कर्षं चकार य ॥ ३१ ॥

**जनकः**—(स्मृत्वा शतानन्दं प्रति) भगवन्नहिल्यानन्दन ! सोऽयं तत्रभवान् मैत्रावरुणी दशरथपार्थिवादप्यधिकतरमेव स्निग्धबुद्धिरस्मासु । तथाहि—

जन्येन राजन्यजनेन सार्द्धमरुन्धतीजानिरुपागतोऽपि ।
भृशमस्मदीयं प्रमदात् तदानीं, सम्बन्धिनं प्रत्युत सञ्चचार ॥ ३२ ॥

**शतानन्दः**—मिथिलाधिपते ! भवता दशरथाभिधानमभिदधानेन स्मारितोऽस्मि तन्महिमानमसमानम् । पश्य—

सङ्ग्रामाङ्गणनिर्जितक्षितिपतिश्रीसंविभागोऽर्थिना,
चक्रे येन न केवलं बलवता सर्वोऽपि साधारण ।
देवस्यापि सुरारिशोणितसुरा[2]पानप्रवीणासिना,
दोस्तम्भप्रभवस्वशक्तिविभुताभोगोपयोगो हरे ॥ ३३ ॥

अपरं च—

कोपोत्कटस्य शकटेन [3]सदक्षमृक्षं,
मङ्क्षु प्रणाशयकृते प्रविविक्षतस्तत ।
सौरेर्महस्य रिपुनिग्रहचण्डचाप,
येन व्यधायि निजदोर्यु[4]गमर्गलाऽसौ ॥ ३४ ॥

**जनकः**—भगवन् ! अपरमपि वितर्कयामि—

अकालनेन यद् राज्ञा भवनारम्भ कृतस्तम ।
महेषु सहते सैष पङ्क्तुलिदर्शनम् ॥ ३५ ॥

(पुनः स्मृत्वा सोल्लासम्) तेन पुनर्नूतनसम्बन्धिना वसुन्धराधीश्वरेण निजकुलसदृशी बहुमतिरस्मास्मासु विस्तृता । तथाहि—

अप्यल्पं बहु मानसेन मुदितेनास्मत्कृतं मानयन्,
जामातुर्जनकोऽपि भक्तिनिरतोऽस्मासु सप्रश्रय ।

1 वर्णोऽस्य वर्ण प्रकर्षं भा० । 2 पानप्रवी दे० । 3 सदृश भा० । 4 गर्गं भा० । 5 दत्त दे० ।

निर्वर्त्योपयम पुरीं निगमिषु सोत्कण्ठमापृच्छय न,
स्वस्याविस्मरणाय सैष विदधे पृथ्वीपति प्रार्थनाम् ॥ ३६ ॥

( पुनर्विमृश्य ) तया पुन कोशलेश्वरदुहित्रा सीताविषये स्नेहा[1]विष्करणेन वयमपि पश्चात्कृता । पश्य—

कौशल्यया नववधू समधूकमाला,
तारकालिकप्रमदवाष्पपरिप्लुताक्ष्या ।
अङ्के निवेश्य तनया मम नैकवार
मालिङ्गिता तदनु मूर्द्धनि चुम्बिता च ॥ ३७ ॥

किं बहुना ? सेयं सदाऽपि भवत कुलगुरो शुभध्यानसमृद्धि । तथाहि—

स श्वशुर सा श्वश्रू स वर स गुरु स वंशश्च ।
सर्वं सुविहितमेतन्मम दुहितुस्त्वत्प्रसादेन ॥ ३८ ॥

**प्रतीहारः**—( क्षणमिव स्थित्वा ) कथमद्यापि चिरयति हरिदत्त ? ।

( तत्र प्रविशति कञ्चुकी । )

**कञ्चुकी**—( साश्चर्यम् )

तत् पौरुष निश्चितं यद् विचिन्त्य, चमत्करोति त्रिदिवेश्वरोऽपि ।
रामस्य तत् किञ्चिदनुद्धतत्व, पात्रं न मेवाभरणोऽपि यस्य ॥ ३९ ॥

( अग्रतो निरीक्ष्य ) कथमय महाराजसीरध्वजो मदागमनमित एव प्रतीक्षते ? । तदेनमुपसर्पामि । ( इति तथाकृत्वा "तत्पौरुष" इत्यादि पठति । )

**जनक**—( श्रुत्वा ) हरिदत्त ! किं तत्रैव दशरथापत्यस्य शङ्करशरासन भङ्गवृत्तान्तेन त्वमेव मुखरीकृतोऽसि ? ।

**कञ्चुकी** नहि नहि ।

**जनक** —( ससम्भ्रमम् ) किं तर्हि ? ।

**कञ्चुकी**—देव श्रूयताम्—वैदेहीविवाहमहो सवानन्तरम्—

सम्भाष्य नरेश्वरो, मधुरया वाचा तदन्त पुर,
प्र या दाशरथिधन परिजनो भक्त्या वशिष्ठस्तया ।

---

1 स्नेहकर दे० ।

सानन्दं च सविस्मयं च सचमत्कारं च विभ्रन्मनः,
स्थानं स्वं मिथिलापुरीपरिसराद् गन्तुं प्रतस्थे ततः ॥ ४० ॥

**जनकः**—ततस्ततः ? ।

**कञ्चुकी**—ततश्च देव ! मदामोदमनोरमैः स्तम्बेरमैः, अनुपमवेगविराजिभिर्वाजिभिः, लीलालङ्घितविषमपथैर्महारथैः, प्रकाशितशौर्यसम्पत्तिभिः पत्तिभिः परिवृतो महाराजश्रीदशरथः पथि प्रतिष्ठमानः प्रतिकूलानि शकुनान्यालोकयामास ।

( सर्वे श्रुत्वा शङ्कां नाटयन्ति । )

**जनकः**—कानि पुनस्तानि ? ।

**कञ्चुकी**—अवधार्यताम्—

अप्रदक्षिणचरान् कुरङ्गकान्, वीक्ष्य तानथ पथि प्रदक्षिणान् ।
शङ्कितो दशरथः पुरोहितं, पृच्छति स्म वदति स्म सोऽप्यदः ॥ ४१ ॥

**शतानन्दः**—( जनकं प्रति ) महाराज ! कृतमाशङ्कया[1] । स खलु यत्र शक्तिजनकः [2]सप्तमर्षिर्गोप्ता भवति तत्र विफलान्येव दुर्निमित्तानि । तथाहि—

यत्र क्षमा [3]दधति हन्त ! हिमाद्रितुल्ये,
वैरस्यमाप कुशकाशजकोपवह्निः ।
दृष्टोऽप्यनिष्टशमनं न करोति केषा-
मन्तर्मुखीकृतमनाः स मुनिर्वसिष्ठः ? ॥ ४२ ॥

**जनकः**—क सन्देहः ? ।

**हरिदत्तः**—तत किमभिहितं तेन मिहिरान्वयपुरोहितेन ? ।

**कञ्चुकी**—स्वामिन् ! इदमुदीरितम्—

मा भैर्षीर्भुजवरभीषितारिवीर !,
ब्रूमस्तत् तव नृपते ! यदत्र भावि ।
भीमाकारं किमपि [4]पुरः प्रदर्श्य पश्चात्,
कल्याणं कथयति ते निमित्तमेतत् ॥ ४३ ॥

**जनकः**—ततस्ततः ? ।

---

1 किमा° दे० । 2 सप्त[म]र्षिगोप्ता भवति वसिष्ठो रक्षक तत्र दे० । 3 दधति दधति हि° दे० । 4 पुरः भा० ।

**कञ्चुकी**—देव ! तत्रैव शिबिरविरचनाया विधीयमानाया, समुच्छ्रीयमाणेषु पटावासपटलेषु, कटकनिवासिभिर्नैकरहमहमिकया निरूप्यमानेषु छायापादपेषु, यवसेन्धनोदकार्थे प्रतिचलितेषु कर्मकरप्रकरेषु, प्राग्यानिकरथादवतरति च महाराजदशरथे तावत् कुतोऽपि—

उन्मूलितद्रुमवना घनपांशुपूर
व्याविद्धसूरकिरणस्फुरणा समन्तात् ।
तस्यावनीविजयिन शिबिरप्रदेश,
वातावली सकलमाकुलयाञ्चकार ॥ ४४ ॥

**जनकः**—ततस्तत ? ।

**कञ्चुकी**—

मध्ये तस्या कोऽप्यनिर्धार्यरूपस्तेजोराशि प्रादुरासीत् पुरस्तात् ।
मर्त्याकार सोऽथ सलक्ष्यते स्म, ज्ञात पश्चान्निश्चित जामदग्न्य ॥ ४५ ॥

**सर्वे**—( ससम्भ्रमम् ) कथ जामदग्न्य सम्प्राप्त ? ।

**शतानन्दः**—( विचिन्त्य सरोमाञ्चम् ) मिथिलाधिनाथ ! न वचनगोचरस्तस्य तेजस्तपोराशे पौरुषप्रकर्ष । तथाहि—

कुर्वन् करै क्षितिगतोऽपि सहस्रसख्ये,
सापत्न्यक दिनकृत [1]कृतवीर्यसूनु ।
य पश्चिमाचलमिवातुलशृङ्गमेत्य,
प्रास्तस्तथाऽस्तमुदियाय यथा न भूय ॥ ४६ ॥

**जनकः**—तथ्यमेवैतत् ।

**हरिदत्तः**—ततस्तत ? ।

**कञ्चुकी**—अथागतपरशुरामो रामपिता नरपति सरभससमासनादुत्थाय सार्घपात्रपाणि प्रणामपूर्वमेन भृगुपुङ्गवमित्यभिदधे—

जय कदर्थितपार्थिवसन्तते !, जय समग्रमहीवलयप्रद ! ।
जय निरस्तविशाखमुखद्युते !, जय कुठार[2]हृतार्जुनदोर्वन ! ॥ ४७ ॥

अपि च—

देवोऽय दिवि तेजसामधिपतिश्चेऽय तेजोऽधिक,
पुष्यत्यद्य मनुर्मनुष्यपतिषु श्रेय कला पुष्कराम् ।

---

1 कृतवीरसूनु द० । 2 'रहवा' भा० ।

[1]तन्मानयन् बहु बहु क्षमतामुपेत्य,
भूयः प्रयच्छ तनयं भगवन्! नमस्ते ॥ ५१ ॥

(इति रामं दर्शितवान्।)

**जनकः**—ततस्ततः।

**कञ्चुकी**—(ततश्च पादपतितं दशरथमुत्थाप्य) स प्रमथाधिनाथशिष्यः पुनरेवमवादीत्—राजन्निन्दुमतेय!

मह्यं द्रुह्यतु न द्वेषपात्रमेव भवेन्मम।
नाहं सहे महेशानचापव्यापादनं पुनः ॥ ५२ ॥

**जनकः**—कथं[2]भगणितदशरथप्रणिपातेन ☞ विस्मृतच्यवनादिवचननिर्मुक्तक्षत्रवधबन्धेन च सरब्धमेवं भगवता भार्गवेण[3]। तथा मति किमध्यवसितं तेन ☜ दाशरथिना।

**कञ्चुकी**—देव! विज्ञप्यते—रामभद्रोऽप्युन्मिषत्सरोजरसेन मुखेन पुनः प्रबद्धाञ्जलिरित्यभिहितवान्—भगवन्! [4]ऋचीकान्वयचूडामणे!

ब्रह्मचारिविजयार्जितकीर्ते!, दुस्तरव्रतविधानविधान!।
एष दाशरथिषु प्रथमस्त्वां, मौलिना प्रणमति प्रणतेन ॥ ५३ ॥

**जनकः**—ततस्ततः।

**कञ्चुकी**—ततश्च क्षत्रियान्तकारिणा परशुधारिणा [5]साक्षेपमित्यभिहितो रामभद्रः—आः क्षत्रियबटो! मिथ्याविनीत! किमहं ब्रह्मचारिणः कुमारस्यैव विजयादुपलब्धप्रसिद्धिः? न पुनरुन्मदमेदिनीपालकुलोच्छेदात्?। विश्वं व्रतानामेव विधानमहम्? न पुनस्तेजसाम्?। मौलिनैव प्रणतोऽसि? न [6]च चेतसा?। तदवलोक्यतामिदानीम्—

रे रे क्षत्रियडिम्भ! किं भवधनुर्भङ्गाभिमानी भवान्,
जानीते जगतां त्रयीमपि गताहङ्कारवीरामिव?।
ग्रस्ताशेषनृपान्वयोऽप्यसुहितः सोऽद्यापि धात्रीमिमां,
धात्रीं पश्यति तत् पुलाककवलो कण्ठी कुठारो मम ॥ ५४ ॥

इत्यभिदधानस्य तस्य सस्मितमुखाभिरामेण रामेण दत्तमिदमुत्तरम्—

---

1 तं मान॰ भा॰। 2 भवग॰ भा॰। 3 द्रष्टव्या पत्र १९ टिप्पणी २। 4 ऋचीक॰ द॰। 5 साक्षेपमभिहितो रामभद्र—भो क्षत्रिय॰ भा॰। 6 च तेजसा भा॰।

व्याहारैर्वा यस्य कटुभिर्निष्ठुरैर्वा प्रहारैः
स्वस्याऽऽवेगप्रशमनमसावस्ति रामः [1]पुरस्ते ।
इक्ष्वाकूणां यदपरिचित[2]क्षारणाकारणानां,
विश्वस्मिन्नप्यहतगतयः सायका विप्रवर्जम् ॥ ५५ ॥

**जनकः**—ततस्ततः ! ।

**कञ्चुकी**—तेनाथ मयि[3] तातिचलपार्थिवौजसा साक्षेपमिदमुदीरयाञ्चक्रे—

पुंसः पुराणस्य धनुः पुराणं, मन्ये त्वयाऽपि श्रोणितं गुणैस्तत् ।
यद्यस्ति शक्तिस्तव तन्मुरारेरधिज्यमिष्वासमिदं कुरुष्व ॥ ५६ ॥

इत्यभिधाय धनुरर्पितम् ।

**जनकः**—(सोद्वेगम्) [4]विषमा खलु रामभद्रपौरुषपरीक्षा ।

**शतानन्दः**—अमर्षणश्च परीक्षकः ।

**जनकः**—भवतु ।

**हरिदत्तः**—ततस्ततः ! ।

**कञ्चुकी**—ततश्च—

निवार्यमाणोऽपि स साध्वसेन, पित्रा [5]सबाष्पेक्षणया च मात्रा ।
आदाय रामः सहसैव नीचैश्चकार चापं च मदं च तस्य ॥ ५७ ॥

**सर्वे**—(सहर्षमुच्चैःस्वरम्) साधु रामभद्र !, साधु दिलीपकुलप्रदीप !, साधु दुरवगाहसाहसनिधे !, साधु जनक ! ।

**हरिदत्तः**—चक्रपाणिचापसमारोपणादनन्तरं किमध्यवसितं रामभद्रेण ! ।

**कञ्चुकी**—यत् तस्य धीरोदात्ततायाः[6] संवदति । तथापि व्यक्तं विज्ञप्यते—

गुणतोऽपि विलक्षणां नृपकुलश्रीदक्षिकरसे मुना-
युद्धाद्युदयोनुकेषु जगतीपालेषु पश्यत्स्वपि ।
सीतायां समयस्थितावपि पुरो रामेण[7] धृत्वा धनु-
र्न क्रुद्धं न च गर्जितं न लसितं किन्तु स्थितं पूर्ववत् ॥ ५८ ॥

---

1 पुरस्तात् दे० । 2 शरणा अवनयः अपोहे मा० । 3 मयि निर्गत्य पितृपुत्रेण मनोज्ञ° मा० । 4 विषमे मा० । 5 सरकपौरुषपरीक्षा मा० । 6 °सा मनुविनम् । सपदि मा० । 7 °न धन्वा धनु° दे० ।

**शतानन्दः**—किमेकमुपश्लोक्यते रामभद्रचरितेषु [1]।

**जनकः**—किमारब्ध संरब्धवता तेन स्वधितिध्वनेन [2]।

**कञ्चुकी**—तदनन्तर रामविमुक्तमार्गणेन विगुणीकृतपरलोकगति स भगवान्

[3]स्तुवन् विरक्षेण मुखेन राम, नम्रेण तेनाप्यनुनीयमान ।
जगाम गेह जमदग्निसूनु, शान्तोग्रतेजा इव जातवेदा ॥ ५९ ॥

**जनकः**—(शतानन्द प्रति सहर्षम्) भगवन्! श्रुत श्रोतव्यम्। [3]तदेतया जामातुरभ्युदयवार्त्तया सान्त पुर-पौरमास्मपुर प्रमोदयाम ।

(इति निष्क्रान्ता सर्वे)

॥ प्रथमोऽङ्कः ॥

---

निद्वत्तामुचितज्ञतामुपशम मूर्त्तिप्रसत्तिं यश
सम्पत्तिं परमोपकारपरतामौदार्यमोजस्विताम् ।
नाह वक्तुमल तदेतदखिल श्रीसम्तुपालस्य तद्,
देव स्तौमि तमेव येन सहजे सोऽय गुणिग्रामणी ॥ ६० ॥

---

१ विमर्शपूर्व भा० २ स्तवन भा० ३ तदेतु भामातु० दे० ।

# द्वितीयोऽङ्कः ।

( ततः प्रविशति राजपुरुषः । )

**[ राजपुरुषः ]**—( समन्तादवलोक्य ) अये ! [1]कथं प्रभातप्रारम्भः ? । तथाहि—

महोत्सवः पङ्कजिनीवनानां, रथाङ्गनाम्नां सुकृतावतारः ।
बोधोपलब्धिस्तमसि स्थितानां, विभासते सैष विभातकालः ॥ १ ॥

सम्प्रति हि—

प्रागद्रितो द्रुतमपाकुरुते जपाभा,
प्राभाकरी किरणधोरणिरन्धकारम् ।
राजीवराजिरपि राजति मुक्तबन्धा,
स्वं धाम मन्दयति चन्दनगौरमिन्दुः ॥ २ ॥

( पुरो विलोक्य ) तदहमहस्करं भगवन्तमुपतिष्ठे । ( सविनयमञ्जलिं बद्ध्वा )

सृष्टिसूत्रमिदं स्रष्टुर्विस्पष्टं विवृणोति यः ।
तं मार्गमपवर्गस्य पूषणं प्रणिदध्महे ॥ ३ ॥

अपि च—

सुधाकरसुधारस[2]प्रसभपानपीनात्मना,
चकोरकुलयोषितां प्रसभपीतशीतज्वराः ।
कृतत्रिभुवनक्षिलावतमसावसाना. प्रगे,
जयन्ति जगदीक्षणक्षपकरा. खरांशोः करा. ॥ ४ ॥

( इति परिक्रामन् स्मृतिमभिनीय सशिरःप्रकम्पम् ) अहो ! महती तत्रभगवतो मैत्रावरुणस्य तपोवननिवासिनां प्रत्यूषसमये निजनिजकार्यसम्पादनतत्परता । तथाहि—

स्नात्वा तीर्थजलेन केऽपि बटवः कुर्वन्ति सन्ध्याविधिं,
मन्त्रान् केचिदधीयते, विदधते दोहं गवां केचन ।
सम्मार्जन्ति च होमहर्म्यमपरे, त्रेतानलानुद्धृता-
नन्ये प्रज्वलयन्ति पल्लवयति प्रातर्जुहू[3]पाम्पपौ ॥ ५ ॥

---

1 कथं प्रातःप्रार° दे० 2 °प्रसरपान° दे० । 3 °र्जुहौषा° मा० ।

तदिदानीं राजकुलमेव गच्छामि । (इति परिक्रम्याऽऽलोक्य च) कथ प्रत्यासन्नमेव राजकुलम् ? । (निर्वर्ण्य)

प्रासादेऽत्र वसुन्धराधरपते प्रात प्रबुद्धद्विप-
क्षिप्तोच्छृङ्खलपादशृङ्खलरवैरोजस्वितूर्यस्वने ।
तद्वक्राम्बुजमीक्षितु क्षितिभुजामागच्छता संहत-
च्छत्रच्छन्नमिरातले न लभते सम्पर्कमर्कत्विषाम् ॥ ६ ॥

(पुनर्निपुण निरूप्य) कथमयं कुमाररामभद्रस्य प्रसादनिचको नन्दिभद्रनामा राजकुलादित एवाभिवर्तते ? । 'तदेनमाहूय महाराजदशरथकुमाररामभद्र लक्ष्मणयो प्रवृत्तिमवगच्छामि । (इति नन्दिभद्रमाह्वयति ।)

(तत प्रविशति नन्दिभद्र ।)

**नन्दिभद्रः**—(श्रुत्वा पुरो विलोक्य) अये ! स एप महाराजदशरथस्य यथार्थवर्णो विनयन्धरो मामित समाकारयति । (इत्युपसृत्य परस्पर हस्तमेलन कुरुत ।)

**नन्दिभद्रः**—सखे ! क सम्प्रति पर्युत्सुक एव ([2] इव) प्रचलितोऽसि ? ।

**विनयन्धरः**—समर्थित पार्थिवादेशद्वयमावेदयितु राजकुले ।

**नन्दिभद्रः**—किं तदादेशद्वयम् ? ।

**विनयन्धरः**—प्रथमस्तावदयं पुरवासिना प्रति—

भङ्क्त्वा भर्गशरासन जनकभूर्येनोपयेमे, स च
भ्रूभङ्गो भृगुपुङ्गवस्य नमित सम्पीड्य चापं हरे ।
रामस्याऽऽगम'नोद्यतस्य निनदत्तूर्यं पठन्मागध,
सानन्दप्रजमुच्छ्रितध्वजपट कर्त्तव्यमेतत् पुरम् ॥ ७ ॥

अपरश्च भगवतो वशिष्ठस्याऽऽकारणाय तदाश्रमगमनम् ।

**नन्दिभद्रः**—ततस्तेन भगवता समाहूतेन किमभिहितम् ? ।

**विनयन्धरः**—यदिदानीं कुमाररामभद्रस्य देवप्रतिकूलता काऽपि वर्तते तद् वयमिहैव तत्प्रतिविधानसावधाना स्वशिष्य जानुकर्णमेव तत्र प्रेषयिष्याम । त्व तु क्वेदानीं प्रस्थितोऽसि ? ।

1 हस्तचिह्ना'दर्शयं यत्र मा० नास्ति । 2 'गमनोद्यत गदद मा० ।

**नन्दिभद्रः**—अद्यतनरजनीसमये सानन्दपौरजनप्रवर्त्यमानखण्डपरशुकोदण्डखण्डनपरशुरामपराजयप्रभृतिनिजपौरुषवर्णनाकर्णनलज्जमानमानसः कुमाररामभद्रो महाराजदशरथमेवं विज्ञपयितुं मामिह प्राहिणोत्—

भग्नं जीर्णं त्रिनयनधनुर्यन्मया दैवयोगाद्,
[1]यः संसोढः शिशुरिति रणे रैणुकेयेन चाहम् ।
लोकः प्रीत्या तदपि किल मे पौरुषं भाषमाणो,
वार्यः कार्या न खलु महतां गर्हणा निर्निमित्तम् ॥ ८ ॥

**विनयन्धरः**—नन्दिभद्र ! बालभावादपि जानामि जानकीजानेः प्रकृतिमिमाम्—

लोकप्रीणानपि निजगुणान् धर्ममार्गाध्वनीनः,
काकुत्स्थोऽयं न खलु यच्च[2]साऽभ्यर्चयत्यर्चनीयान् ।
अन्येषां तु प्रकटपुलकः स्तौति मन्दानपीमान्,
केयं हन्त ! स्फुरति महतां सामवृत्तिः प्रवृत्तिः ? ॥ ९ ॥

तदिदानीं किं कुरुते कुमाररामभद्रः ? ।

**नन्दिभद्रः**—अद्य [3]कुमारभरते शत्रुघ्नसहिते मातामहमन्दिरमुपेयुषि तत्प्रवासवैमनस्येन दुर्मनायमाना देवीं केकयराजदुहितरमात्मदर्शनेन प्रमोदयितुं महत्येव प्रभाते कुमाररामभद्रस्तत्र गतवान् । तदनन्तरं निजमनोविनो[4]दनाय लीलोद्याने जिगमिषुरासीत् । (पुनर्विमृश्य) विनयन्धर ! ज्ञायते किमप्यनतिचिरप्रोषितस्य वशिष्ठमुनेराकारणकारणम् ? ।

**विनयन्धरः**—किमवबुध्यते ! । दुर्बोधाः खलु राजकार्यगतयः ।

**नन्दिभद्रः**—ननु भवाननवरतमासन्नवर्ती तस्य रघुचक्रवर्तिनः, निपुणमाकारेङ्गितज्ञश्च, तत् कथं परिज्ञातमपि कार्यमस्माकमपलपसि ? ।

**विनयन्धरः**—न सम्यगवगच्छामि । परमेवं वितर्क्यते—सम्प्रति हि महाराजदशरथः—

शरीरे वैराग्यं श्रयति शिथिल[5]श्रोतसि यथा,
यथाऽयं वेदान्तश्रुतिषु नृपतिः पुष्यति रतिम् ।

---

1 सद्यः सोढः दे० । 2 °साऽभ्यर्चय° भा० । 3 कुमाररामभरते भा० । 4 °नोदाय भा० ।
5 °थिल. श्रो° भा० ।

[1]यथा चित्ते किञ्चिद् विमृशति च रामं स्पृशति च,
ध्रुवं तन्न्यस्तश्रीर्वनगमनमाकाङ्क्षति तथा ॥ १० ॥

**नन्दिभद्रः**—(सचमत्कारं नखच्छोटिकां दत्त्वा) विनयन्धर! नूनमेतदेव चिकीर्षति महाराजदशरथः। यदिदं महर्षीणामाकारणं पौर-जानपदप्रधानपुरुषाणां च समवायकरणं सुमन्त्र-वामदेवप्रभृतिभिरमात्यैः सह सुचिरं पर्यालोचनं चेति। समुचितं चैत[2]दिदानीं महाराजस्य।

जरसोऽपि जरा यत्र सम्राट् सज्जोऽस्तु मुक्तये।
रामस्तु भुक्तये यस्मिन् यौवनस्यापि यौवनम् ॥ ११ ॥

परमपरं पर्यनुयोज्यमस्ति—यदसौ कुमाररामभद्रस्य राज्याभिषेकमहोत्सवः सर्वजनसम्मतः, न चात्र कोऽपि प्रत्यूहकर्ता नितर्क्यते, [3]तत् कथमप्रकाशितप्रयोजनं प्रधानपुरुषाणामाकारणम्? व्यपदेशान्तरेण च पुरशोभाप्रवर्तनम्?। ननु व्यक्तमेव किमिति नोद्घुष्यते?—प्रभाते रामभद्रस्य राज्याभिषेको भविष्यतीति।

**विनयन्धरः**—(विहस्य) नन्दिभद्र! सरलाशयो भवान्। न वेदिता नीतिमार्गस्य। कल्याणकार्याणि हि प्रत्यूहबहुलानि भवन्ति। तदेतानि निष्पादितान्येव प्रकाश्यन्ते।

**नन्दिभद्रः**—तथ्यमेवैतत्। तदिदानीमहमपि कुमाररामभद्रसमी[4]पमुपसर्पामि। भवान् पुनर्महाराजसमीपम्। (इति निष्क्रान्तौ)

॥ विष्कम्भकः ॥

(ततः प्रविशति रामभद्रः प्रतीहारी लीलोद्यानपालश्च।)

**रामः**—(सोत्कण्ठमुद्यानपालं प्रति) मालाधर! तदिदानीमपि न विस्मरत्यस्मदीयहृदयम्, यत् किल प्रवासावसरे बाष्पकुण्ठीकृतकण्ठेन विनयसम्पुटीकृतपाणिना चाभिहितं वत्सभरतेन।

**मालाधरः**—देव! तदादिश्यताम्।

**रामः**—तातपादप्रणामादनन्तरं मामुपसृत्य वत्सभरतः सप्रश्रयमेवमुक्तवान्—

---

1 यथा किञ्चित् कि° दे०। 2 °तदिदं महा° दे०। 3 तत् किमप्र° दे०। 4 °मीपमनुस° दे०।

तातस्तातः सा सवित्री सवित्री, रामेणैव त्वं तु मन्ये सनाथम् ।
तन्निर्वास्यो देव ! नाहं त्वचित्तादभ्यर्थ्यैवं मां प्रणम्य प्रतस्थे ॥ १२ ॥

**मालाधरः**—देव ! सूर्यवंशोत्पत्तेरव्यभिचारिणी वशिष्ठोपदिष्टविद्यासङ्क्रमस्य[1] सदृशी स्वाभाविकविवेक-स्नेहसौरभेण सुरभीकृता परस्परं स्नेहवृत्तिर्दशरथनन्दनानाम् । सम्प्रति पुनरपरत्र—

अप्येकपितृजातानामप्येकस्तन्यपायिनाम् ।
दृश्यते विरला कापि भ्रातृणामेकचित्तता ॥ १३ ॥

**प्रतीहारी**—[1]देव ! विसेसदो राम-लक्खणाणं सत्तुग्घ-भरदाणं अन्नुण्णं सिणेह-[2]पउत्ती दीसदि ।

**रामः**—( परिक्रम्य ) मालाधर ! कथय कि[3]यति दूरे लीलोद्यानम् ? ।

**मालाधरः**—प्राप्ता एव तद्द्वारम् । तदवधारयतु देवः—

उपनयति कुसुमगन्धं गन्धवहः [4]सह मरन्दबिन्दुलवैः ।
श्रूयन्ते च स्पष्टाः षट्पद[5]झङ्कारा: ॥ १४ ॥

( इति सर्वे लीलोद्यानप्रवेशनं नाटयन्ति । )

**रामः**—( समन्तादवलोक्य सहर्षम् )

लीलोद्यानमिदं मुदे मम फलश्रेणीनमत्पादपं,
कूजत्कोकिलमस्खलन्मधुकरं माद्यन्मयूरं पुरः ।
[6]यन्मध्ये प्रियबान्धवेन मधुना सार्द्धं विधत्ते शिवा-
रुद्धैकार्द्धशरीरशङ्करतपश्चर्योपहासं स्मरः ॥ १५ ॥

**मालाधरः**—देव ! प्रत्यूषकालविशेषिता लीलोद्यानशोभा विभाव्यताम्—

द्विगुणमरुणिमानं पल्लवाः पादपानां,
दधति सति विभाते भास्कराभीशुभिन्नाः ।
उपहितमिहिकाम्भःसीकरालीकराला,
सकुसुमकलिकेव भ्राजते पत्रपङ्क्तिः ॥ १६ ॥

---

१ देव ! विशेषतः राम-लक्ष्मणयोः शत्रुघ्न-भरतयोः अन्योन्यं स्नेहप्रवृत्तिः दृश्यते ।

---

1 °मसदृशी स्वाभाविकसौरभेण भा० । 2 °पवृत्ती दे० । 3 किमतिदूरे भा० । 4 समकर° भा० । 5 °षट्पदाद्या° भा० । 6 यन्मध्यप्रियया° भा० ।

**रामः**—मालाधर! दर्शय द्राक्षामण्डपस्य पन्थानम्, यथा तत्रोपविश्य देव्याः समागमनं प्रतिपालयामः।

**मालाधरः**—इत इतो देवः। (इति परिक्रम्य द्राक्षामण्डपतले यथोचितमुपविशन्ति।)

**रामः**—(पवनस्पर्शमभिनीय सानन्दम्)

चूतैः कन्दर्पदूतैः, सरसकिशलयाह्लादिलोकैरशोकैः,
शालैः प्राप्तप्रवालैर्विहितमधुकरश्रेणिसङ्गैर्लवङ्गैः।
गानैश्च श्लाघ्यमानैः परभृतवयसामत्र कान्ते वनान्ते,
वायुस्तापार्चिजायु शिशिरयति हृतस्वेदनीरं शरीरम् ॥ १७ ॥

(पुनः स्मृतिमभिनीय प्रतीहारीं प्रति) प्रभावति! चिरकालादपि [1]नावलोक्यते प्रियवयस्यो माण्डव्यः।

**प्रतिहारी**—(विहस्य) देव! [1]यदा भिउडिबंधभीसणायारो गिहीदकोदंडचंडहत्थो कोवारुणलोअणजुअलो आअच्छंदो परसुरामो दिट्ठो तक्कालपहुदि तद्दंसणपणट्ठो अज्जमंडव्वो दाणिं वि ण [2]दिट्ठिगोयरो भोदि।

**रामः**—(सुदूरमवलोक्य) मालाधर! कोऽयं सहकारकाननात् त्वामनुसरन् वानर इव विलोक्यते? य एष पश्य—

निष्कारणमधिरोहणमवरोहणमंह्रिपेषु कुर्वाणः।
निजचित्तादपि चपलः प्लवङ्गमोऽयं समभ्येति ॥ १८ ॥

**मालाधरः**—देव! चिरकालपरिचयविश्रम्भादनभिशङ्कमानो वानरः [3]सोऽल्पणनामा मम समीपमागच्छति।

**रामः**—अहो! महदाश्चर्यं यन्नरवानरयोः परस्परं विश्रम्भः।

**मालाधरः**—देव! नैतदद्भुतम्। निरन्तरवनवासाभ्यासान्नर-वानरयोरपि मैत्री सम्भवति।

---

१ देव! यदा भ्रुकुटिबन्धभीषणाकारः गृहीतकोदण्डचण्डहस्तः कोपारुणलोचनयुगलः आगच्छन् परशुरामो दृष्टः तत्कालप्रभृति तद्दर्शनप्रनष्टः आर्यमाण्डव्यः इदानीमपि न दृष्टिगोचरो भवति।

1 °ल्पये म° दे०। 2 न दिलो° दे०। 3 रणाऽऽलो° मा०।

( प्रविश्य वानरो मालाधरसमीपमुपसर्पति । )

( नेपथ्ये )

सहि [1]हंसिये ! दंसेहि लीलुज्जाणस्स पंथाणं ।

**रामः**—( श्रुत्वा ) मालाधर ! [2]नियतमियं देवी जनकसुता समागच्छति । तदितो गत्वा लीलोद्यानस्य मार्गमदृष्टपूर्वं दर्शय प्रियतमायाः ।

**मालाधरः**— यदादिशति देवः । ( इति वानरेणानुगम्यमानः परिक्रामति । )

**रामः**—( सानुरागमात्मगतम् ) अहो ! रमणीयतमा काचिदवस्था सम्प्रति प्रियतमायाः । यतः—

मुक्त्वा कृत्रिमपत्रकेलि[3]रलकन्यासे प्रयत्नः परः,
प्रौढिं [4]च क्रमणे क्रमेण लभते लीलागतिर्नेत्रयोः ।
वक्षस्तः सिचयाञ्चलं विचलितं वेगान्निधत्ते च य-
न्मध्येऽसौ तनुमध्यमा विहरते तन्मौग्ध्यवैदग्ध्ययोः ॥ १९ ॥

अपरं च—

शय्यायां स्वयमेत्य नोपविशति प्रोक्ताऽपि भूयो मया,
ब्रूते नाभिमुखी, रुणद्धि च बलात्कामस्पृशं मे करम् ।
वैदेही रहसि स्थिता न सहते दीपप्रभावैभवं,
तद् बाल्ये विरमत्यपि प्रियतमा नापत्रपां मुञ्चति ॥ २० ॥

( ततः प्रविशति सीता स्कन्धावलम्बितताम्बूलभाण्डा हंसिका च । )

**सीता**—( मार्गद्वयमवलोक्य ) सहि हंसिए ! इमिणा मग्गेण गंतव्वं ? एदिणा वा[2] ।

**हंसिका**—[3]पियसहि सीदे ! अहं पि फुडं न याणामि ।

**मालाधरः**—( उपसृत्य प्रणम्य च ) देवि ! इत इत आगम्यताम् ।

( सीता वानरं दृष्ट्वा भयं नाटयति । )

---

१ सखि हंसिके ! दर्शय लीलोद्यानस्य पन्थानम् ।
२ सखि हंसिके ! अनेन मार्गेण गन्तव्यम् ? एतेन वा ? ।
३ प्रियसखि सीते ! अहमपि स्फुटं न जानामि ।

---

1 हंसिए । भा० । 2 नियतं देवी भा० । 3 °लिमल° भा० । 4 चंक्रमणे क्रमेण भा० ।

**हंसिका**—(सत्रासम्) हीमाणहे[1] वाणरो वाणरो। (इति व्याहरन्ती पलायते।)

**मालाधरः**—(विहस्य सीतां प्रति) देवि! न भेतव्यम् न भेतव्यम्। खेलनकम सावस्माकं वानर, तदिदं कौतुकमवधार्यताम्। (वानरं प्रति) अरे सोलण! सहकारपादपादितं फलमादाय समर्पय देव्यै।

(वानरस्तूर्णमुत्प्लुत्य तथाऽकरोति।)

(सीता वानरमायान्तमवलोक्य सभयं पश्चादपसर्पति।)

**मालाधरः**—देवि! निःशङ्कमादीयतामिदं फलम्।

(सीता भयेन वेपमाना फलमादत्ते।)

**मालाधरः**—(दूरमवलोक्य) हंसिके! निःशङ्कमागम्यताम्, यथा तवापि कपिरेष फलं प्रयच्छति।

**हंसिका**—(सभयम्) मालाहर! पिअसहीए सीदाए ज्जेव एस वाणरो फलप्पदो भोदु। अहं पुण जाव एसो ताव णाऽऽगमिस्सं।[2]

**सीता**—मालाहर! अण्णदो पेसीयदु एस वाणरो।[3]

**मालाधरः**—आदेशः प्रमाणम्। (इत्यभिधाय वानरमन्यतः प्रेषयति।)

(वानरोऽपि द्रुतमुत्प्लुत्य निष्क्रान्तः।)

**मालाधरः**—देवि! इत इतः। कुमाररामभद्रो द्राक्षामण्डपे भवदागमनं प्रतीक्षमाणो वर्त्तते, तदागम्यतामिति।

(सर्वे द्राक्षामण्डपाभिमुखं परिक्रामन्ति।)

**रामः**—(सीतामवलोक्य सानुरागमात्मगतम्)

किं कुर्मः? सकलं विलोकितमिदं, पृष्टाश्च शिष्टाः, किम-
प्यस्याः क्वापि पुनः समोत्तमगुणं नादर्शि नाश्रावि वा।
तत् तुल्यं तुहिनांशुनाऽपि वदनं, नेत्रद्वयं पङ्कजै-
रप्योष्ठं सुधयाऽपि, चम्पकरुचाऽप्यङ्गं वत! ब्रूमहे॥ २१॥

---

१ अरे! वानर वानर।

२ मालाधर! प्रियसख्यै सीतायै एव एष वानरः फलप्रदो भवतु। अहं पुनः यावदेष तावद् नागमिष्यामि।

३ मालाधर! अन्यतः प्रेष्यताम् एष वानरः।

---

1 मालाधर! मा०। 2 °पभि° मा०। 3 °रप्योष्ठसुधया मा०।

किञ्चास्याः—

चक्रं विधाय विधिना निधिमन्मृगाक्ष्या,
प्रक्षालितं करसरोजयुगं तु येन ।
पीयूषमित्यनुपदं व्यपदिश्यमान-
मानन्दहेतुरुदकं जगतस्तदेव ॥ २२ ॥

(प्रकाशम्) देवि! जनकराजात्मजे! इदमासनमास्यतामिति।

(सर्वे यथोचितमुपविशन्ति।)

**हंसिका**—(पश्चादवलोक्य सभयं सीतां प्रति) [1]सहि सीदे! एस पुणो वि वाणरो समागच्छदि। (इति पलायितुमिच्छति।)

**सीता**—(दृष्ट्वोपलक्ष्य च सस्मितम्) [2]हंसिए! ण [1]खु एस वाणरो, अज्जउत्तस्स पियवयस्सो अज्जमंडव्वो एस इत्थ समागच्छदि।

(ततः प्रविशति विदूषकः।)

**विदूषकः**—(पुरो विलोक्य) [3]कहं एस पियवयस्सो जणयरायतणयासजुत्तो दक्खामंडवतले चिट्ठदि?। ता इत्थ गमिस्सं। (इत्युपसृत्य) [2]सत्थि तुम्हाणं। (इत्यभिधायोपविशति।)

**रामः**—वयस्य माण्डव्य! चिरादवलोकितोऽसि।

**विदूषकः**—[4]वयस्स! ज चिरादो वि दिट्ठु म्हि तं परमं मंगलं।

**रामः**—कुतः कारणात्?।

**विदूषकः**—[5]तुज्झ[3] पाणिग्गहणमहूसवे मिहिलाणयरं गदो। 'जामादुयस्स पिय-

---

१ सखि सीते! एष पुनरपि वानरः समागच्छति।

२ हंसिके! न खलु एष वानरः, आर्यपुत्रस्य प्रियवयस्यः आर्यमाण्डव्य एषोऽत्र समागच्छति।

३ कथं एष प्रियवयस्य जनकराजतनयासंयुक्तः द्राक्षामण्डपतले तिष्ठति?। तदत्र गमिष्यामि। स्वस्ति युष्मभ्यम्।

४ वयस्य! यद् चिरादपि दृष्टोऽस्मि तत् परम मङ्गलम्।

५ तव पाणिग्रहणमहोत्सवे मिथिलानगरं गतः। 'जामातुरस्य प्रियमित्रम्' इति कृत्वा जनकपरिजनवितीर्णबहुमोदकभक्षणेन तथा कथमपि मन्दाग्निरिह सञ्जातः, यथा निजभाग्यवशात् पुण्यैः जीवितोऽस्मि।

---

1 वसु मा०। 2 सत्थि! र(1 ब)म्हाण' मा०। 3 भव! पानि' दे०।

मित्तु' त्ति पडुय जणयपरिंयणदिण्णपहूदमोदगभक्खणेण तहा [2]एहं पि मंदग्गी अह सं'जादो जहा णियरंभणीए पुण्णेहिं जीविदु म्हि ।

**रामः**—वयस्य ! तर्हि वडवाग्नेरपि कदाचिदुदराग्निमान्द्यं सम्भाव्यते ।

**मालाधरः**—( विदूषकं प्रति साहङ्कारम् ) मयि विद्यमाने न भेतव्यं रोगेभ्यो भवता ।

**विदूषकः**—मालाहर ! किं विज्जो भवं [1] ।

**मालाधरः**—

वैद्यराजोऽस्मि विद्याया कुर्वे गर्वं तु नान्यवत् ।
रोगं वा रोगिणं वाऽऽशु नाशयामि न संशय ॥ २३ ॥

( सर्वे श्रुत्वा हसन्ति । )

**विदूषकः**—( सरोषमिव ) आं बंभरक्खस ! तहिं गच्छ अत्तणो विज्जाए सहिदो तुमं, जदो न पुणो वि समागच्छसि [2] ।

**सीता**—अज्ज मडव्व ! जदि तादजणयपरियणेण [3]पभूदमोदयभोयणमुवणीदं, ता कथं [4]पभूदभक्खणादो तुमं ण उवरदो सि [3] ।

**विदूषकः**—( साहङ्कारम् ) भोदि जणयनन्दणि ! जदि एस पियवयस्सो रामभद्दो [5]पभूदवीरसमरादो उवरमदि ता अहं वि [6]पभूदमोदयभक्खणादो उवरमामि [4] ।

**रामः**—( स्मित्वा ) अहो ! महती प्रतिज्ञा प्रियमित्रस्य । ततस्तत [5] ।

**विदूषकः**—तदो महदि ज्जेव पभादे सत्तट्ठमोदयभक्खणाणंतरं मज्झण्णसञ्झाविधिं

---

१ मालाधर ! किं वैद्यो भवान् ? ।

२ आ ब्रह्मराक्षस ! तत्र गच्छ आत्मनो विद्यया सहितः त्वम्, यत न पुनरपि समागच्छसि ।

३ आर्य माण्डव्य ! यदि तातजनकपरिजनेन प्रभूतमोदकभोजनमुपनीतम्, तत् कथं प्रभूतभक्षणात् त्वं न उपरतोऽसि ? ।

४ भवति जनकनन्दिनि ! यदि एष प्रियवयस्य रामभद्रः प्रभूतवीरसमराद् उपरमति तद् अहमपि प्रभूतमोदकभक्षणाद् उपरमामि ।

५ ततः महति एव प्रभाते सप्ताष्टमोदकभक्षणानन्तरं मध्याह्नसन्ध्याविधिं कृत्वा अत्राऽऽगतोऽस्मि ।

---

1 'यणदिण्ण' मा० । 2 दह कह दे० । 3 सवुत्तो जहा मा० । 4-5 6-7 पहूअ' भा० ।

कडुय इत्थ'मागदो म्हि ।

**रामः**—वयस्य ! कथ मोदकभक्षणानन्तर मध्याह्नसन्ध्याविधि ? ।

**विदूषकः**—[1]णं खु ओसहभक्खणे मज्झण्णसञ्झाविहाणम'तरीभोदि ।

**रामः**— [ तत् ] कस्य व्याधेरौषधम् ? ।

**विदूषकः**—[2]ण कधिद ज्येव मदग्गी सवुत्तो म्हि ।

**रामः**—( स्मित्वा सोत्प्रासम् ) वयस्य ! जठराग्निकुण्ठत्वे मोदकभक्षणं परमौषधम् ।

☞ **सीता**—[3]हसिए ! उवणेहि तंबोल अज्जमडव्वस्स ।

( हसिका ताम्बूलभाण्डमपश्यन्ती वैलक्ष्य नाटयति । ) ☜

**सीता**—[4]ण पाडिद कहि पि ? ।

**मालाधरः**—देवि ! वानरभयात् पलायमानया हसिकया ताम्बूलभाण्डमित पातितम् । ( इत्यङ्गुल्या दर्शयति । )

**सीता**—[5]हसिए ! तुम सय ज्येव 'गहिदुआगच्छ ।

**हसिका**—[6]बीहेमि वाणरादो । ण गमिस्स ।

**मालाधरः**—देवि ! तिष्ठतु हसिका । अहमेव समानीय समर्पयिष्यामि । ( इति तथाकरोति । )

**विदूषकः**—( साहङ्कारमात्मान दर्शयन् ) [7]हसिए ! एदस्सि वीरपुरिसे 'सण्णिहिदे कुदो तुज्झ भयावयासो ? ।

**प्रतीहारी**—(विहस्य) [8]अज्ज मडव्व ! परसुरामदसणक्खणे परिक्खि'दपोरिसो भव ।

---

१ न खलु औषधभक्षणे मध्याह्नसन्ध्याविधानमन्तरीभवति ।
२ ननु कथितमेव मन्दाग्नि सवृत्तोऽस्मि ।
३ हसिके ! उपनय ताम्बूल आर्यमाण्डव्याय ।
४ ननु पातित कुत्रापि ? ।
५ हसिके ! त्व स्वय एव गृहीत्वाऽऽगच्छ ।
६ बिभेमि वानरात् । न गमिष्यामि ।
७ हसिके ! एतस्मिन् वीरपुरुषे सन्निहितेऽस्थित कुतस्तव भयावकाश ? ।
८ आर्य माण्डव्य ! पर्शुरामदर्शनक्षणे परीक्षितपौरुषो भवान् ।

---

1 'त्थ आग' भा० । 2 'तरायीभोदि भा० । 3 हस्तचिह्नान्तर्वर्ती पाठ दे० नास्ति ।
4 गहिअमा' भा० । 5 सचिहिद्धिदे भा० । 6 'दपोरसो दे० ।

**विदूषकः**—( सक्रोधम् ) आ दासीएधूदे[1] ! ण याणासि तुमं, मह महाबम्हणस्स सावोदग्गेण परसुरामकोवग्गी उवसमं गदो ।

**रामः**—मालाधर ! दर्शय सकलमप्येतदुद्यानमिति ।

( सर्वे लीलोद्यानम( [2] ना )वलोकनार्थमुत्थाय परिक्रामन्ति । )

**मालाधरः**—देव[1] ! विलोक्यतां तावदिदं —

अशोक[3]श्रेणीयं नवकिशलयोल्लासरुचिरा,
विराजत्युन्निद्रं वकुलमुकुलानां मुखमिदम् ।
पराग पुन्नागद्रुमसुमनसामेष च पुरो,
मरुद्भिर्वल्लीनामपि भवति हल्लीसकमिव ॥ २४ ॥

**रामः**—( समन्तादवलोक्य ) अये ! वसन्तावतार इव । तथाहि—
माकन्देषु फलोदयादिह भवन्त्यूनं प्रसूनागमं,
प्रीताः पञ्चमगीतिगर्भितमिव कूजन्ति पुंस्कोकिलाः ।
शोभां बिभ्रति किंशुकाः शुकमुखच्छायासखैः कोरकैः,
उन्निद्रं कुरुते स्मरं च मधुरं पुष्पन्धयानां ध्वनिः ॥ २५ ॥

**मालाधरः**—देव ! मनोरमत[4]ममेतदवधार्यताम्—
निर्विच्छेदच्छदानामुदयति चम्पकानां य[5]नान्त-
र्नैतर्नेतः सरसिजसखं नेत्रमन्यत्र नेयम् ।
मध्ये यस्य द्युतिपतिकरागोचरत्वाद्दशान्त-
ध्वान्ते दीपा इव विरचिता कोरकालिच्छलेन ॥ २६ ॥

**रामः**—मालाधर ! यथाऽयं पाटलापटलपरिमलस्तथा [6]मन्ये निदाघसमयेनापि यातम् । पश्य—
दिष्ट्या दृष्टः स प्रविष्टः पृथिव्यां,
कुर्वन् कर्णोत्तंसमूषा शिरीषैः ।

---

१ आ दास्याः पुत्रि ! न जानासि त्वम्, मम महाब्राह्मणस्य शापाग्निः उपशमं गतः ।

---

1 देव ! भा० । 2 "दरय श्रेणी नर" द० । 3
द० । 4 "तरमे" भ० । 5 "वनान्तालेत" भा० । 6 र

तापार्तानां यत्र यच्छत्यनूनां

यूनां प्रीतिं शीतमम्भः करम्भः ॥ २७ ॥

**सीता**—( रामं प्रति ) [1]अज्जउत्त! इत्थ बाढं संतावो वट्टदि, ता अण्णदो गच्छम्ह।

( इति सर्वे परिक्रामन्ति। )

**मालाधरः**—स्वामिन्! अपरेऽपि नूनमृतवो देवसेवार्थे निजनिजरूपमुल्लासयन्तः समायाता एव। इतस्तावत् तापात्ययस्वरूपमवधार्यताम्—

जयति जगति प्रौढामोदं कदम्बकदम्बकं,

स्फुरति कुटजश्रेणी, वेणीभवन्ति दिशां घनाः।

[1]हरिहयहरिज्जाते वाते प्रसर्पति सर्पभुक्-

कुलसुलभया रत्या केषां न नृत्यति मानसम्? ॥ २८ ॥

**विदूषकः**—(विलोक्य सहर्षम्) [2]ही ही! एस सयल[2]मच्चलोयजीविदकारणं वरिसारत्तो सं[3]पत्तो, ता गाइस्सं णच्चिस्सं (इति रे[4]ल्लुणुकान् ददानो नृत्यति।)

( सर्वेऽप्यवलोक्य हसन्ति। )

**मालाधरः**—देव! स एष प्रकटीकृतखञ्जरीटपेटको हंसावतंसितकमलाकरः शारसमयः। तथाहि—

मयूरीणां रीणा श्रुतिविषयमायाति न रुतिः,

गणोऽयं भृङ्गीणां रणति कृतसप्तच्छदपदः।

प्रसत्तिं पाथोऽपि [5]प्रथयति यथा सम्प्रति तथा,

शरत्कालः केलीरुचिरिह वनान्ते विचरति ॥ २९ ॥

(अन्यतो विलोक्य च) कुमार रामभद्र! सुकुमारलवलीलतावितानफलोच्चालः स एष हेमन्तकालः। यः किल—

तोये शीते स्फीतबिम्बद्युतीन्दौ,

मन्दीकुर्वन्नादरं चन्दनेऽपि।

---

१ आर्यपुत्र! अत्र बाढं सन्तापो वर्तते, तदन्यतः गच्छामः।

२ आश्चर्यम् आश्चर्यम्, एष सकलमर्त्यलोकजीवितकारणं वर्षारात्रः सम्प्राप्तः तद् गास्यामि नर्तिष्यामि।

---

1 हरहरिहरि° दे०। 2 °मच्चलो° मा०। 3 संपुत्तो मा०। 4 रेल्लुकान् मा०। 5 प्रसरति दे०।

एणाक्षीणामेष पुष्यत्यनेहा,
स्नेहाधिक्यं पावकिन्या हसन्त्याम् ॥ ३० ॥

**रामः**—मालाधर! अपरमप्यत्र विमृश्यताम्—

शीतलं यदनिलं जनस्त्यजन्, प्रज्वलन्तमनलं निषेवते।
तद् ध्रुवं समय एव गौरवे, कारणं न गुणसम्पदः पुनः ॥ ३१ ॥

(पुनरन्यतो विलोक्य सीतां प्रति) प्रिये! पश्य शिशिरापगम-वसन्तागमरमणीयतमा समयलक्ष्मी। इह हि—

लभन्ते सौभाग्यं किमपि हरिणाङ्कस्य किरणाः,
पिकाः शब्दायन्ते स्वगतममृतस्यन्दिवचसः।
चलन्त्यद्य श्रो योपवनपवनाश्चन्दनगिरे
रनामं कामस्य स्फुरति च शुभाशसि नयनम् ॥ ३२ ॥

अपरं च—

श्रीखण्डशैलपवमानविवर्द्धमान
मानग्रहो मनसिजस्त्रिजगज्जयाय।
कुन्दानि मन्दमकरन्दमदानि मुक्त्वा,
चापे च पेशलरसं बकुलं पिधत्ते ॥ ३३ ॥

**सीता**—(भ्रमरबाधां नाटयन्ती रामं प्रति) अज्जउत्त! एस कुसुमिदलदाओ परिहरिय मह वयणाहिमुहो शिलीमुहो परिब्भमदि। (इति राममुरसर्पति।)

**रामः**—देवि!

मल्लीषु नोल्लसति, नाटति पाटलासु,
नीपान्यपास्यति, विमुञ्चति चम्पकानि।
नाम्भोरुहे भ्रमति, केतकमेति नाय,
भृङ्गः कृशाङ्गि! भवदाननगन्धलुब्धः ॥ ३४ ॥

**सीता**—(सभ्रूभङ्गम्) कधमिदो वि एस महुयरो मामणुसरदि[2]। (इति करसरोरुहेण निवारयति।)

**रामः**—(दृष्ट्वा स्वगतम्)

---

१ आर्यपुत्र! एष कुसुमितलताः परिहृत्य मम वदनाभिमुखः शिलीमुखः परिभ्रमति।
२ कथमितोऽपि एष मधुकरः मामनुसरति?।

मुग्धाया अपि कान्ताया व्युत्पत्तिं गमिता परम् ।
भ्रूलीला मधुमत्तेन स्मरेण भ्रमरेण च ॥ ३५ ॥

( पुनर्भ्रमरं प्रति )

भ्रातश्चञ्चरीक भ्रमर ! भवता किं तपः ? क प्रदेशे ?,
के वा देवा श्रुतिसुखकृता रञ्जिता गुञ्जितेन ? ।
यत् कान्ताया प्रसभमभयस्ताड्यमानोऽपि लीला
पद्मेनैव स्पृशसि वदनामोदलोलः कपोलम् ॥ ३६ ॥

( प्रकाशं पुनर्मालाधरं प्रति ) मालाधर ! मध्याह्नकालकठोरीकृतकिरणजालो भगवान् गभस्तिमाली । सम्प्रति हि—

घर्माम्भःसम्भरा श्रीर्विलसति दयिताभालमालम्ब्य किञ्चित्,
सच्छाया श्रान्तकाय श्रयति च निचयं पक्षिणां वृक्षशाखा ।
पादं पूष्णः कदुष्णं शिशिरयति सरस्तीरनीरः समीरः,
क्षीरक्षोणीरुहाधः स्थितिमिह दधते गोकुलान्याकुलानि ॥ ३७ ॥

तद् दर्शय क्रीडातडागिकापदवीम्, यथा तत्रोपविश्य मध्यन्दिनमतिवाहयाम ।

**विदूषकः**—भो वअस्स ! [1]उवत्थिदा भोअणवेला, ता गमिस्सं । ( पुनः प्रतीहारीं प्रति ) भोदीए पभावदि ! देहि मे हत्थावलम्बणं । ण खु बुभुक्खाए चलिदुं सक्कुणोमि ।

**प्रतीहारी**—( विहस्य ) [2]अज्ज मडव्व ! इत्थ थूलोदरदा अवरज्झति, ण उणो बुभुक्खा ।

**रामः**—प्रभावति ! यथा रोचते प्रियवयस्याय तथा विधीयताम् । ( इति प्रभावत्या दत्तहस्तावलम्बो विदूषको निष्क्रान्तः । )

**मालाधरः**—स्वामिन् ! इत समागम्यतामिति ।

( सर्वे परिक्रामन्ति । )

**मालाधरः**—देव ! विलोक्यताम्—

१ भो वयस्य ! उपस्थिता भोजनवेला, तद् गमिष्यामि । भवति प्रभावति ! देहि मे हस्तावलम्बनम् । न खलु बुभुक्षया चलितुं शक्नोमि ।

२ आर्य माण्डव्य ! अत्र स्थूलोदरता अपराध्यति, न पुनः बुभुक्षा ।

1 उवत्थिदा भोअणवेला, मडव्व' भा० । 2 'ज्झदि, ण उण भा० ।

इय सा हंसालीकलितकमला केलिसरसी,
रसद्भिः सानन्दं जलविहगवृन्दैः कृतपदा ।
गभीरे यत्नीरे हिमसमयमन्त स्थितमित,
समुद्धर्तुं शक्तो न हि तुहिनमुक्तोऽपि सविता ॥ ३८ ॥

तदस्यास्तीरतरुच्छायायामुपविश्यताम् । ( इति तथाकुर्वन्ति । )

**रामः**—( सीता प्रति ) प्रिये वैदेहि ! दृश्यतामियं क्रीडातडागिका—

दुग्धस्निग्धजला तरङ्गतरला ससक्तरक्तोत्पला,
तीरोत्तुङ्गनगा विहङ्गसुभगा प्राप्तप्रमोदाध्वगा ।
उद्भ्रान्तभ्रमरा विराजिशफरा नश्यन्निदाघज्वरा,
सेयं तुल्यरसीकरोति सरसी किं नाऽऽवयोश्चेतसी [1] ॥ ३९ ॥

**सीता**—( सस्पृहमवलोक्य ) [१]अज्जउत्त ! पिक्ख पिक्ख खेल्लतरायहंसमिहुणेहिं वि[3]सट्टकदुट्टवणेहिं मणोहारिणी एसा कासारिया ।

**रामः**—( अपवार्य ) प्रिये ! भवदालोकनकृतार्थीकृतलोचनस्य मम किमेतया पुनरुक्तवस्तुशोभा[4]विभूषितया निभालितया [2] । यत —

त्वदधरमधुरं पयस्त्वदक्षिद्वयदसितानि [5]पुर सरोरुहाणि ।
तव गतिविजिताश्च राजहंसास्तव भ्रुकुटीकुटिला तरङ्गभङ्गि ॥ ४० ॥

( पुन सोपरोधम् )

बाले ! विलोकय दिगन्तरमन्तरायो,
माऽस्तु त्वदीयवदनेन्दुभयादकाले ।
संयोगसम्मदकथासु रथाङ्गनाम्ना
मम्भोरुहा च हसतां सह राजहंसे ॥ ४१ ॥

**हंसिका**—( दूरमवलोक्य रामं प्रति ) [२]कुमार रामभद्द ! एस को वि पुरिसो समागच्छदि ।

---

१ आर्यपुत्र ! प्रेक्षस्व प्रेक्षस्व—खेलद्राजहंसमिथुनैः विकसितनीलकमलैः मनोहारिणी एषा कासारिका ।

२ कुमार रामभद्र ! एष कोऽपि पुरुष समागच्छति ।

---

1 °मत्र दिय° दे० । 2 मिति क्रीडा दे० । 3 विसमकुडुअवणेहि मणाहारिणी एसा सरिया ( विशङ्कुताचनैः मनोहारिणी एषा सरित् ) दे० । 4 °शोभाभिभूतया °। यत दे० । 5 पुरा दे० ।

**रामः**—( [1]दृष्ट्वोपलक्ष्य च ) कथमयं विनयन्धरः सम्प्राप्तः ? ।

( प्रविश्य )

**विनयन्धरः**—( प्रणम्य ) कुमार ! महाराजदशरथस्त्वामाह्वयति ।

**रामः**—( विमृश्य ससम्भ्रमम् ) विनयन्धर ! कथं तातपादाः समाकारयन्ति ? । ( सीतां प्रति ) प्रिये ! त्वमपि मातुः कौशल्यायाः समीपमुपसर्प । तातादेशश्रवणानन्तरं वयमपि तत्राऽऽगमिष्यामः ।

( सीता हसिकया सह निष्क्रान्ता । )

**रामः**—मालाधर ! त्वमप्युद्यानपालनव्यापारतत्परो भव ।

**मालाधरः**—यदादिशति देवः । ( इति निष्क्रान्तः । )

**रामः**—( समुत्थाय परिक्रामन् ) विनयन्धर ! किं कुर्वन्ति तातपादाः ? ।

**विनयन्धरः**—कुमार ! निजाश्रमादागतं लिखितपत्रहस्तं देवराताभिधानं महामुनेर्विश्वामित्रस्य शिष्यं सत्कारपूर्वं विसृ[2]ज्य तत्रभवतो वशिष्ठस्य प्रियशिष्येण जानूकर्ण्येन समं सल्पन्तः सन्ति ।

**रामः**—अपि ज्ञायते कोऽपि लिखितार्थः ? ।

**विनयन्धरः**—तदेतल्लिखितमवधारयतु देवः । ( इत्यर्पयति । )

**रामः**—( गृहीत्वा वाचयति । )

> स्वस्ति, स्वाश्रमतः पतिः शमवतां श्रीगाधिपुत्रः पुरे,
> साकेते सुकृतैकसक्तमनसं श्रीरामतातं नृपम् ।
> आशीर्वादमुदीर्य जल्पति यथा[3] कार्यं च यत् निघ्नन,
> प्रारब्धं भवताऽस्ति मन्दगतिना मान्यं न तस्मिन्निति ॥ ४२ ॥

( पुनर्विमृश्य ) किं नु नाम तत् कार्यम् ? यदर्थं भगवान् विश्वामित्रस्तातपादानेवं त्वरावतः करोति ।

**विनयन्धरः**—( विहस्य ) तत्रापधारितपदः कुमारः स्वयमेव तत् कार्यमवगमिष्यति ।

**रामः**—विनयन्धर ! जानामि भगवन्तं जानूकर्ण्यम्, क्व पुनरयं देवरातो नाम ? ।

**विनयन्धरः**—अवधारयतु कुमारः—

---

1 ( दृष्ट्वा उपलक्ष्य च ) दे० । 2 °व्याहृत° मा० । 3 °ज्य भगवतो दे० । 4 तथा दे० ।

शुनःशेफो नाम्ना मुनिरयमजीगर्त्ततनयः,
क्रतौ हारिश्चन्द्रे नृपसुतपशौ यं किल पिता ।
ददौ तद्रक्षार्थं तदनु [1]नुतितुष्टेन हरिणा,
हविष्यान्मुक्तोऽसौ [2]कुशकसुतसूनुः स्वयमभूत् ॥ ४३ ॥

तदनन्तरं च—

विश्वामित्रः पुत्रमादाय दोर्भ्यां,
कृत्वोत्सङ्गे हर्षबाष्पाम्बुवर्षी ।
पश्चादेनं देवराताभिधानं,
मध्ये तेषामृत्विजां व्याजहार ॥ ४४ ॥

**रामः**—( स्मृत्वा सचमत्कारम् ) यः किल मन्त्रस्तुतिपरितोषितप्रजापतिप्रभृतिदेवताप्रसादादपास्तयूपबन्ध[3]नं पशुनन्धवर्जितमाञ्जसवं नाम यज्ञं ददर्शेति श्रूयते ।

**विनयन्धरः**—अथ किम् । ( पुनरग्रतो विलोक्य ) कुमार ! स एष महाराजः दशरथः पुरतो जानूकर्ण्यसहितो वर्त्तते ।

( ततः प्रविशति यथानिर्दिष्टो दशरथो जानूकर्ण्यश्च । )

**दशरथः**—भगवन् जानूकर्ण्य !

किमाख्यामस्तेषामविषयमनोभिः स भगवान्,
स्वजन्मा यैर्जन्मावधि विधिरदेकः प्रणिहितः ।
नमस्यः सोऽपि स्यान्निवसति जराजर्जरवया,
प्रयागप्रत्यन्तप्रसृतसलिलायां सरिति यः ॥ ४५ ॥

**जानूकर्ण्यः**—राजन्नजराजनन्दन ! सुकृतसम्पादनीया खल्वियं सामग्री । तथाहि—

सरस्वत्यां स्नानं, शिरसि हरिशेषाः सुमनसः,
प्रसन्ना हृद्वृत्तिः, शतपथकथाचर्वणरसः ।
मुनीनामाराध्या परिषदरिषड्वर्गजयिनी,
विना पुण्यैरेषा न भवति मनीषा तनुभृताम् ॥ ४६ ॥

**रामः**—(उपसृत्य) तात ! त्वदपत्यं रामभद्रः प्रणमति । ( इति दशरथं प्रणम्य ) भगवन् ! नमस्तुभ्यम् । ( इति जानूकर्ण्यं प्रणमति । )

---

1 मुनितुष्टेन भा० । 2 कुसुक° द० । 3 °न्धन पशुबन्धय° द० ।

**जानूकर्ण्यः**—स्वस्ति भवते ।

**राजा**—( सहर्षम् ) वत्स रामभद्र ! इहोपविश्यताम्। ( इत्यात्मसमीपमुपवेशयति। )

**जानूकर्ण्यः**—( उभावपि निर्वर्ण्य स्वगतम् )

राजा राजत्यनेनाय सुतेनान्तिकवर्तिना ।
प्ररोहेणाऽऽत्मतुल्येन वटवृक्ष इवोन्नत ॥ ४७ ॥

**राजा**—भगवन् मैत्रावरुणशिष्य !
उत्पत्ति शिशिरेतरद्युतिकुले, विद्यागुणस्त्वद्गुरो,
( पुन सलज्जम् )
जित्वाऽपि स्वयमाहवे दितिसुतान् विष्णुर्ददौ मे यश ।
( राम दर्शयन् )
सोऽय शक्तियुत सुतश्च, यदिह प्राप्य तदाप्त मया,
तन्नित्य प्रणवाभिधेयमधुना त्वन्तु समीहे मह ॥ ४८ ॥

**जानूकर्ण्यः**—महाराज ! न हि प्रश्रयवशादनुचितमभिधातुमर्हसि । तथाहि—

स्वर्गौकसामधिपतिर्धृतचण्डचाप
मारोप्य वीरसमरावसरे पुनस्त्वाम् ।
सज्जीकरोति न गज कुलिश न धत्ते,
किन्तु द्विषा स लभते विभव भुवं च ॥ ४९ ॥

तदिदानीमात्मचिकीर्षितसम्पादनाय समायात समयो महाराजस्य । पश्य—

आद्ये विद्या कुलगुरुमुखात् सङ्गृहीता समस्ता,
जाता धात्री भुवनविजयश्रीर्द्वितीयेऽद्वितीये ।
तार्त्तीयीके वयसि तु सितच्छत्रमारोप्य पुत्रे,
पुण्यारण्यप्रणयनिपुणैर्भूप[1] भाव्य भवद्भि ॥ ५० ॥

**राजा**—( राम शिरस्याघ्राय ) वत्स ! सज्जय निजभुजभवन्धमधुना वसुन्धराभारोद्वहनाय[2] । यत —

एते प्रवीरचरितैः[3] प्रचुरानुरागात्,
त्वामात्मनाऽप्यनुसिसीर्षति[4] राजलक्ष्मी ।

---

1 °रथाद्य समीपे समुप° भा० । 2 °भारोद्वरणाय भा० । 3 प्रवरा° दे० । 4 राज्यत° दे० ।

सा प्राप्य सम्प्रति ममानुमतिं कृतार्थी
भूयान्मया च जरता रमता तपश्री ॥ ५१ ॥

( राम तूष्णीमधोमुखस्तिष्ठति । )

**राजा**—( रामस्य चिबुकमुन्नमय्य ) वत्स ! किमुदासीनतामस्मदीये वचसि समालम्बसे [1] ।

**रामः**—( सविनयम् ) तात !

समीहिता कस्य न राज्यलक्ष्मीस्त्रापि चित्रागुकुलोद्भवाऽसौ ।
मनस्तु तस्यामपि मुक्तभाव, त्वत्पादसेवास्वनुरज्यते मे ॥ ५२ ॥

**राजा**—( विहस्य ) वत्स ! न जानासि निजपूर्वजाना त्रिभुवनविख्यातमिद कुलव्रतम् । तथाहि—

यावन्मूर्द्धनि मूर्द्धजा पिकरुचि गृह्णन्ति तावद् गृहे
स्थातु, पातुमिला, विलासमनया कर्तु यतन्ते श्रिया ।
शुभ्रत्व तु गतेषु तेषु तदनु स्थित्वा वने पावने,
शिष्टोद्दिष्टममी शमेन गमयन्त्यायुष्याशुवंशोद्भवा ॥ ५३ ॥

**जानूकर्ण्यः**—कुमार रामभद्र ! सर्वथा नदेतदनुल्लङ्घनीय गुरुवच ।

( नेपथ्ये )

**वैतालिकः**—देव ! सुखाय भवते भवतु सायन्तन सन्ध्यासमय । सम्प्रति हि—

अर्थाम्भोभिर्वरुणनगरीवासिना वासरेन्द्रे,
पादोष्माण शमयति वियद्वर्त्मखेदोपनीतम् ।
देशे देशे दिशि दिशि तम कोलकाकोलराय-
च्छायाचौर विहरति मुहुर्बन्धुरं बन्धुकीनाम् ॥ ५४ ॥

अपि च—

अनीदृशीमामदशा विमृश्य, सैष प्रतापी सविताऽपि सम्यक् ।
तेजो निज राज्ञि नवे निवेद्य, यियासतीवाऽस्तगिरेर्वनान्तम् ॥ ५५ ॥

---

1 'ताऽस्मदीये वचसि समालम्ब्यते ? भा० । 2 'त्रापि [नि]रमां' भा० । 3 'दल्ह' भा० । 4 तेजो नवं राज्ञि दे० ।

( प्रविश्य )

**कञ्चुकी—**देव ! विज्ञापयति केकयराजसुता यदत्र पादोऽवधार्यतामिति ।

**राजा—**शिखबल ! किमिदानीमध्यवस्यति देवी ? ।

**कञ्चुकी—**देव ! कुमाररामभद्रराज्याभिषेकाभ्युदयवार्ताप्रमुदितैः पुरनिवासिभिः प्रवर्त्त्यमाना नगरशोभा विभावयितुं चन्द्रशालाधिरूढा बहिःप्रदेशादागतया मन्थरया सह किमपि पर्यालोच्य मामिह प्रहितवती ।

**राजा—**वत्स ! गच्छामो वयं देव्या भरतमातुः समीपम् । त्वमपि वध्वा सीतया सहितो राज्याभिषेकव्रतग्रहणाय प्रगुणीभव ।

**रामः—**यदादिशति देवः । ( इति उत्थाय सर्वे निष्क्रान्ताः )

॥ द्वितीयोऽङ्कः समाप्तः ॥

---

सत्कविकाव्यशरीरे दुष्यदगददोषमोषणैकभिषग् ।
श्रीवस्तुपालसचिवः सहृदयचूडामणिर्जयतु ॥ ५६ ॥

# तृतीयोऽङ्कः ।

( ततः प्रविशति उत्तरीयाञ्चलाच्छादितवल्कलयुगला पत्रहस्ता मन्थरा । )

**मन्थरा**—[1] अज्ज मह चिरकालसंवड्ढिदो[1] फलिदो मणोरहपायवो । ( इति हर्षनाटितकेन परिक्रम्य ) पेसिद म्हि देवीए केगईए अज्जसुमंतसमीवं । जहा–कुमाररामभद्दो रहमारोविय तुवरिदमित्थ[2] समाणीयदु त्ति । ता संपादिदमेदं[3] मए । ( पुरो विलोक्य ) एसा सुबुद्धिया दुदियं विय मह हिययं इदो य्येव आगच्छदि, ता पडिवालयिस्सं ।

( ततः प्रविशति सुबुद्धिका । )

**सुबुद्धिका**—( सानन्दम् ) [2] सुप्पभादा भयवदी रयणी अउज्झाए, अहवा सयलाए ज्जेव पुहईए, जं अज्ज कुमाररामभद्दस्स रज्जाहिसेयमहूसवो हविस्सदि त्ति । सम्पयं खु पउर-जणवदलोएहिं लद्धनिहाणेहिं विय पमोदपूरिदेहिं पूरिदाओ नयररत्थाओ । ता गडुय नयरसोहं पिक्खिस्सं । ( पुरो विलोक्य ) अये ! कधं एसा अज्जा मन्थरा ? । ( इत्युपसृत्य ) अज्जे ! कहिं पत्थिदाऽसि ? ।

**मन्थरा**—[3] देवीए केगईए समीवं ।

**सुबुद्धिका**—[4] अज्जे ! संपदि विसेसदो हरिसिय व्व लक्खीयसि ? । अहवा अस्सिं रामभद्दस्स रज्जाहिसेयमहूसवे किं अवरं पि हरिसकारणं पुच्छीयदि ? ।

---

१ अद्य मम चिरकालसंवर्द्धितः फलितः मनोरथपादपः । प्रेषिताऽस्मि देव्या कैकेय्या आर्यसुमन्त्रसमीपम् । यथा–कुमाररामभद्रः रथमारोप्य त्वरितमत्र समानीयतामिति । तत् सम्पादितमेतद् मया । एषा सुबुद्धिका द्वितीय इव मम हृदयम् इत एव आगच्छति, तत् प्रतिपालयिष्यामि ।

२ सुप्रभाता भगवती रजनी अयोध्यायाम्, अथवा सकलाया एव पृथिव्याम्, यद् अद्य कुमाररामभद्रस्य राज्याभिषेकमहोत्सवो भविष्यतीति । साम्प्रतं खलु पौर-जनपदलोकैः लब्धनिधानैः इव प्रमोदपूरितैः पूरिता नगररथ्याः । तद् गत्वा नगरशोभां प्रेक्षिष्ये । अये ! कथम् एषा आर्या मन्थरा ? । आर्ये ! कुत्र प्रस्थिताऽसि ? ।

३ देव्याः कैकेय्याः समीपम् ।

४ आर्ये ! सम्प्रति विशेषतः हृष्टा इव लक्ष्यसे ? । अथवा अस्मिन् रामभद्रस्य राज्याभिषेकमहोत्सवे किं अपरं अपि हर्षकारणं पृच्छ्यते ? ।

---

1 °सवढ्ढिदो दे० । 2 °रियमित्थमा° भा० । 3 °दमेवेद । पुरो भा० ।

**मन्थरा**—सुबुद्धिए अवर पि चिट्ठदि ।

**सुबुद्धिका**—किं णु त ? ।

( मन्थरा कर्णे कथयति । )

**सुबुद्धिका**—( क्षण विचिन्त्य ) कध देवीए केगईए गिहिदो एस दे मतो ? ।

**मन्थरा**—अणिच्छती वि बलादो गाहिदा ।

**सुबुद्धिका**—किं बल ? ।

**मन्थरा**—पढम तेहि तेहिं वयणोवण्णासेहि पडिबोहिदा[1] वि जदा न पडिबुज्झदि, तदो मए बालत्तणम्मि सिद्धजोइ[2]णीसयासादो लद्धमोहणमत्ताहिमतिद कडुअ तबूल दिण्ण । तस्स चव्वणाणतर मोहिदहिययाए तीए मह वयणं पडिवण्ण ।

**सुबुद्धिका**—कध एस मतो महाराए वि संचरिदो[3] न वेति ? ।

**मन्थरा**—संचरिदो ज्येव ।

**सुबुद्धिका**—केह चिय ? ।

**मन्थरा**—पुंव्व किल महाराएण देवीए दुवे वरा सय पडिवण्णा, ता तं [4]ज्येव वरजुअल देवीए महारायसयासादो जायिद ।

---

१ सुबुद्धिके ! अपर अपि तिष्ठति ।

२ किं नु तत् ? ।

३ कथ देव्या कैकेय्या गृहीत एष ते मन्त्र ? ।

४ अनिच्छन्त्यपि बलाद् ग्राहिता ।

५ किं बलम् ? ।

६ प्रथम तैस्तै वचनोपन्यासै प्रतिबोधिताऽपि यदा न प्रतिबुध्यते तत मया बाल्ये सिद्धयोगिनीसकाशाद् लब्धमोहनम न्त्राभिमन्त्रित कृत्वा ताम्बूल दत्तम् । तस्य चर्वणानन्तर मोहितहृदयया तया मम वचन प्रतिपन्नम् ।

७ कथ एष मन्त्र महाराजेऽपि सञ्चरित ? न वा ? इति ।

८ सञ्चरित एव ।

९ कथमिव ? ।

१० पूर्व किल महाराजेन देव्यै द्वौ वरौ स्वय प्रतिपन्नौ, तत् तदेव वरयुगल देव्या महाराजसकाशाद् याचितम् ।

---

1 °हिदा ण पडिबज्झदि तदो भा० । 2 °णीए सया° भा० । 3 किर भा० । 4 उजेव भा० ।

**सुबुद्धिका**—अज्जे[1]! जदि ण कुप्पसि ता भणामि किं पि।

**मन्थरा**—भण, मा[2] सङ्क।

**सुबुद्धिका**—भवदीए अत्तणो [3]सरिसं मतिदं। ण रहुरायकुलसरिस्सं केगय[4]राय कुलसरिच्छं वा।

**मन्थरा**—[4]सुबुद्धिए! दाणिं तुमं पडिबोहयन्तीए मह कालक्खेवो होदि त्ति ता गमिस्सं। (इति द्रुततरं निष्क्रान्ता।)

**सुबुद्धिका**—(सोद्वेगम्) [5]हा महाराय! [5]रहुरायकुलकमलरायहंस! णियवयण पासे णिवडिदो सि। हा देवि कोसल्ले! [5]सल्लिदहियया कया सि दुट्ठदासीए। हा रामभद्द! णिक्खित्तो सि दुत्तरे वसणसायरे। हा जणयरायणंदणि! कहं हविस्ससि? हा भयवं दिणणाह! कधं तुज्झ वि वसो दुव्विहिघुणघुणिदो सञ्जादो? (इति रोदिति। पुनर्विमृश्य) ता किं दाणिं णयरसोहावलोयणेण? (इति व्यावृत्य निष्क्रान्ता।)

## (ततः प्रवेशकः)

(ततः प्रविशति कौशल्या रामभद्रः सुमन्त्रश्च।)

**सुमन्त्रः**—(सौत्सुक्यम्) कुमार रामभद्र! द्रुततरमुत्सह्यतां राजकुलगमनाय। समारुह्यतामयं काञ्चनस्यन्दनः।

**कौशल्या**—(रामं शिरस्याघ्राय) [6]अज्ज सुमत! रामभद्दपिदुणो महारायस्स

---

१ आर्ये! यदि न कुप्यसि तद् भणामि किमपि।

२ भण मा शङ्कस्व।

३ भवत्या आत्मनः सदृशं मन्त्रितम्। न रघुराजकुलसदृशं केकयराजकुलसदृशं वा।

४ सुबुद्धिके! इदानीं त्वां प्रतिबोधयन्त्या मम कालक्षेपो भवतीति तावद् गमिष्यामि।

५ हा महाराज रघुराजकुलकमलराजहंस! निजवचनपाशे निपतितोऽसि! हा देवि कौशल्ये! शल्यितहृदया कृताऽसि दुष्टदास्या। हा रामभद्र! निक्षिप्तोऽसि दुस्तरे व्यसनसागरे। हा जनकराजनन्दिनि! कथं भविष्यसि? हा भगवन् दिननाथ! कथं तवापि वशः दुर्विधिघुणघुणितः सञ्जातः? तत् किमिदानीं नगरशोभावलोकनेन?

६ आर्य सुमन्त्र! रामभद्रपितुः महाराजस्य समादेशः इव त्वां त्वरयति? कुलपुरपतां सम्पादितः स्नेहो वा?

---

1 अज्जा। भा०। 2 मीसङ्का भा०। 3 सरिसं भा०। 4 केगइरायसरिसं वा भा०। 5 रहुकुल° भा०। 6 समङ्कि° भा०।

समादेसो [1]इत्थ तुम तुवरावेदि ? कुलपुरिसदासपादिदो सिणेहो वा ?

**सुमन्त्रः**—देवि ! यावदहं कृतप्राभातिकक्रियो राजकुलं प्रति प्रस्थितः तावत् त्वरिततरमागत्य मन्थरयेति कथितम्—यन्महाराजसमीपस्थिता देवी केकयराजात्मजा समादिशति—समानीयतां रामभद्रः । तदहमिहागतोऽस्मि ।

**कौशल्या**—( रामं शिरस्याऽऽघ्राय सहर्षम् ) जाणामि, पुत्तअ [2]सला मह पियसही ।

**रामः**—( निःश्वस्य ) आर्य सुमन्त्र !

तस्थे सुखमेव मया धात्रीं विन्यस्तु तातपादेषु ।
सम्प्रति तु राज्यचिन्तागहनगतेनैव भवितव्यम् ॥ १ ॥

**सुमन्त्रः**—कुमार ! निरन्तरं गुर्वादेशवशंवदानां भवादृशानां हृदयवृत्तिर्न कदाचिदपि स्वातन्त्र्यमनुसरति ।

**कौशल्या**—( रामं प्रति ) जाद ! गुरुयणवयणसंपादणे गिहीदव्वदु ज्जेव भव, तो किमेव विमरसीयदि ? ।

**सुमन्त्रः**—कुमार रामभद्र !

सवित्री तव सावित्री साक्षाद् धाता च ते पिता ।
तत् कस्मा[3]देतयोराज्ञा विलम्बेन विडम्ब्यते ? ॥ २ ॥

तदुत्थीयतामिति ।

( सर्वे तथा कुर्वन्ति । )

**सुमन्त्रः**—( कौशल्यां प्रति ) देवि दशरथदयिते ! भवत्याऽप्युपाचमङ्गलसम्भारया तत्र सुमित्रा-वैदेहीभ्यां सह समागन्तुमुचितम् ।

**कौशल्या**—अज्ज सुमंत ! भअवदीण कुलदेवदाण सवरियं णिव्वत्तिय समागमिस्सं । ( इति निष्क्रान्ता )

**सुमन्त्रः**—कुमार कुशलमते ! स एष महाराजदशरथरथः, समारुह्यताम् ।

---

१ जानामि, पुत्रक सला मम प्रियसखी ।

२ जात ! गुरुजनवचनसम्पादने गृहीतव्रत एव भवान्, तत् किमेव विमृश्यते ? ।

३ आर्य सुमन्त्र ! भगवतीनां कुलदेवतानां सपर्यां निर्वर्त्य समागमिष्यामि ।

---

1 इत्थ भा० । 2 सखा भा० । 3 जाद ! गुरुयणवयणसंपादणे ( गुरुजनवचनसंपादने ) गिहीदव्वदो ज्जेव भा० । 4 °दस्मादनयोरा° भा० ।

( इत्युभौ तथाकृत्वा परिक्रामतः । )

**सुमन्त्रः**—आयुष्मन् ! पश्य पश्य भवदीयाभ्युदयप्रमोदनिवर्त्तितनर्त्तत्यान्तरैर्नगरनिवासिभिरुद्भासितामेतां नगरशोभाम् । तथाहि—

सौधान्युद्धृततोरणानि, तरुणीवर्गश्च भर्गप्रिया
तुल्यश्रीः प्रतिमन्दिरं प्रमुदितः सम्भूय गायत्ययम् ।
रथ्येयं पृथुलाऽप्यजायत तथा पुम्कोटिभिः सङ्कटा,
नास्यां नाथ ! यथा तिलोऽपि गलितः प्राप्नोति पृथ्वीतलम् ॥३॥

( तथाकुर्वन्नङ्गुल्या निर्दिश्य ) आयुष्मन् ! पश्य पश्य प्रचुरप्रमोदानुरागहृतहृदयानां नगरनिवासिनीनामिदमध्यवसितम्—

समुद्धर वसुन्धरां चिरमिति प्रयुक्ताशिषः,
किरन्ति कुसुमानि ते शिरसि साधु वृद्धाः स्त्रियः ।
इमाश्च हृदयङ्गमाः पुरपुरन्ध्रयस्त्वन्मुखे,
जितस्मरशिलीमुखाः प्रतिदिशं दिशन्ते दृशः ॥ ४ ॥

( इति परिक्रम्य पुरो विलोकयन् ) स एष महाराजदशरथप्रासादः प्रगुणितप्रभूताभिषेकसम्भारो भरद्वाजप्रमुखमहामुनिमहनीयः परिभाव्यतामायुष्मता ।

सौधेऽत्र नेत्रकमलैः कचुभावतंसा
मुल्लासयन्ति नृपतिप्रमदाः प्रमोदात् ।
आन्दोलनाच्च मरुता ध्वजवैजयन्त्यो,
नृत्यन्ति मङ्गलमृदङ्गरवैरिवैताः ॥ ५ ॥

तदवतीर्यतामितः ।

( रामो रथादवतरणं नाटयति । )

**सुमन्त्रः**—कस्कोऽत्र भोः ! ।

( प्रविश्य )

**पुरुषः**—आर्य ! समादिश्यताम् ।

**सुमन्त्रः**—भद्र ! गृहाण स्यन्दनमेनम्, अश्वांश्च विरमय । ( इति रथमर्पयति । )

( पुरुषो रथं गृहीत्वा निष्क्रान्तः । )

**सुमन्त्रः**—कुमार रामभद्र! तदेतदग्रे देव्या भरतमातुश्चतुःशालम्, यत्रासौ रघुचक्रवर्ती वर्त्तते । तदिदं प्रविशाव इति ।

( उभौ तथा कुरुतः । )

**रामः**—( पुरोऽवलोक्य ससम्भ्रमम् ) आर्य [1]सुमन्त्र! किमपि मन्त्रयमाणाविव पुरतः पितरौ लक्ष्येते । तदसाम्प्रतमनयोर्गन्तुम् ।

**सुमन्त्रः**—( निपुणं निरूप्य ) कुमार! सम्प्रति प्रकोपवती देवी विभाव्यते । तथाहि—

मलिनवसना निस्ताम्बूला निराभरणप्रभा,
शिरसि दधती वेणीभूतं शिरोरुहसञ्चयम् ।
चरणपतितेऽप्यस्मिन् नाथे मुखं च पराङ्मुखं,
विरचयति यद् देवी दूरादमूत् तदमर्षभूः ॥ ६ ॥

तदियं यावन्महाराजस्य प्रणयवचनामृतेन प्रशान्तकोपानल[2] भवति तावदिहैवा वस्थीयताम् । यतः—

एषा विशेषदयिता कृतविप्रियाय,
प्रायः प्रियाय न चिराय करोति रोषम् ।
नीत्वाऽपि रात्रिमपरत्र दिनाधिनाथे,
प्राप्ते कियत् कमलिनी विनिमीलिताऽऽस्ते [3] ॥ ७ ॥

( इत्युभौ स्तम्भान्तरितौ तिष्ठतः । )

( ततः प्रविशति यथानिर्दिष्टा कैकेयी, तां च प्रसादयन् राजा मन्थरा च । )

**राजा**—( सोपरोधम् )

देवि कृशाङ्गि!, हरिणाक्षि! हिरण्यराशिं,
मत्तेभगामिनि! महेभघटां च [4]मत्ताम् ।
स्वैरं गृहाण गृहिणित्वमिदं नु देवि!,
मां मास्म कारय न शर्म न येन धर्मः ॥ ८ ॥

---

1 सुमन्त्र! मा० । 2 °श्च भ भ° मा० । 3 विहिताप्रियाय दे० पाठान्तरम् । दृतमन्यवेऽपि मा० । 4 मत्त दे० ।

[1]अपर च –

पाणिग्रहात् प्रभृति मौल्पिनत्वदाने,
दीनानने च रचिताञ्जलि याचमाने ।
कृत्वा कृपा [2]मयि विजीर्यति देवि! कार्या
दस्माभिरर्चय मम प्रणतोऽस्मि पादौ ॥ ९ ॥

( इति [3]पादयोर्निपतति । )

**सुमन्त्रः**—कथमतिक्रान्तमर्यादो यादोनिधिरिव[4] देव्या प्रणयकोप ? यदिय कृत प्रणाममपि प्राणेश्वर नानुरुध्यते । ( पुनर्दृष्ट्वा विमृश्य च ) कुमार रामभद्र! विप्रकृष्ट-प्रदेशतया न स्फुटा वचनोपलब्धि, परमिङ्गितैरपि वितर्क्यते—यत् किमप्यभीष्टमर्थं याचते देवी, तदप्रियत्वान्नृपतिरदातुकामो मुहुर्मुहुरेव देवीं प्रसादयति ।

**रामः**—आर्य सुमन्त्र! नियतमिय मध्यमाम्बा वनगमनाभिलाषिणस्तातपादाननुगन्तु मना [5]आगृहीतव्रती सुतविन्यस्तपत्नीक वनप्रस्थानपक्षमाक्षिपन्ती तातपादैर्मुहुर्मुहुरेवमनुनीयते ।

**सुमन्त्रः**—कुमार! सर्वोऽपि स्वहृदयानुसारेण परहृदयमपि वितर्कयति, पर नैतदह मन्ये । न ह्येतानल्पयत्नसम्पादनीयोऽयमर्थं । तथाहि—

धृत्वा मूर्धनि यत् पदद्वयमय देवीं मुहुर्याचते,
यच्चैषाऽपि पतिव्रता वितनुते पत्युर्वृथा प्रार्थनाम् ।
भूपृष्ठे लुठति प्रियापगणितो यद् भूपति साऽप्यसु,
तादृक्ष्य यदुपेक्षते तदपर किञ्चिद् दिधित्सुर्विधि ॥ १० ॥

**राजा**—( देवीं प्रति अञ्जलिं बद्ध्वा )

वप्तुर्विद्धि कुल कलङ्कवि[6]कल, नम्र पुर पश्य मा,
कौशल्याप्रणय प्रमाणय, परा रामस्य भक्तिं स्मर ।
धिग्! दासीवचसा विपुल महतामप्युत्तमेनन्विज,
शील शैलसुतानुसारिचरिते! किं निर्मिमीषे मृषा ? ॥ ११ ॥

**कैकेयी**—( मन्थरां प्रति ) मन्थरे! पुणो पुणो वि एवमत्ताणय किलेसयतो

१ मन्थरे! पुन पुन अपि एवमात्मान क्लेशयन् प्रतिबोध्यतां आर्यपुत्र ।

1 अपि च भा० । 2 मयकि जीर्यति भा० । 3 पादयो प° भा० । 4 °रिव प्रकोप भा० । 5 अग्रहवता भा० । 6 °विमर्ल, नम्र पुन पश्य दे० ।

पडिग्गोहीयदु अज्जउत्तो ।

**मन्थरा**—(राजानं प्रति) देव ! जं ज्जेव तुम्हेहिं पसण्णेहिं वरदुवयं पडिवन्नं तं ज्जेव देवी इत्थ पत्थेदि ।

**राजा**—ननु प्राणानसौ प्रार्थयति इति किं न ब्रवीषि ? । (पुनर्देवीं प्रति सकरुणम्) देवि ! [1]प्रमाणीकुरु मे प्रार्थनाम् । सञ्चिन्तय स्वाभाविकमात्मसच्चरितम् । ननु प्रकृतिकोमलानि कुलबालिकानां हृदयानि, तत् किमिदानीं मदीयदुर्दैववशान्निरनुक्रोशतामेवमाश्रिताऽसि ? । (इति पुनः [2]पादयोर्निपतति ।)

**कैकेयी**—(अपवार्य मन्थरां प्रति) समओ दाणिं रामभद्दसमागमणस्स, ता गमिस्सं ।

**मन्थरा**—एवं भोदु । अहं ज्जेव कज्जसेसं समत्थिय समागमिस्सं ।

(कैकेयी निष्क्रान्ता ।)

**राजा**—(उत्थायाऽवलोक्य च सवैलक्ष्यविषादम्) कथं निर्दाक्षिण्यहृदया मां निराशीकृत्य प्रचलितैव चण्डी ? । (पुनः सनिर्वेदमात्मानं प्रति) हा दशरथ ! हतक !

किं गर्भ एव विलयं न गतोऽसि पाप ! ?,
व्यापन्नवानसि न किं ननु बाल एव ? ।
रम्या करेऽत्र किमियं भुजगीव भार्या ?,
दत्तं वरद्वयमिदं भवता किमस्यै ? ॥ १२ ॥

(इति दीर्घं निःश्वसन्नधोमुखस्तिष्ठति ।)

**सुमन्त्रः**—(विलोक्य) कुमार ! प्रस्थिता देवी, तदवसरः साम्प्रतं महाराज-[3]समीपोपसर्पणाय । (इत्युभौ परिक्रामतः ।)

**मन्थरा**—(दृष्ट्वा राजानं प्रति) देव ! समागच्छदि कुमाररामभद्दो ।

**राजा**—(श्रुत्वा व्याकुलतां नाटयन्नाकाशे कैकेयीमुद्दिश्य)

---

१ देव ! यदेव युष्माभिः प्रसन्नैः वरद्वयं प्रतिपन्नं तदेव देवी इत्थं प्रार्थयति ।
२ समय इदानीं रामभद्रसमागमनस्य, तद् गमिष्यामि ।
३ एवं भवतु । अहमेव कार्यशेषं समर्थ्य समागमिष्यामि ।
४ देव ! समागच्छति कुमाररामभद्रः ।

---

1 प्रमाणं कुरु भा० । 2 पादयोः प० भा० । 3 समीपमुप° भा० ।

[1]शतकोटिघटितहृदये ! हतोऽहमधुना त्वया तथा न यथा ।
शक्नोमि सुतस्य मुखं द्रष्टुं स्वं च प्रदर्शयितुम् ॥ १३ ॥

( इति मूर्च्छितः पतति । )

**रामः**—( सहसोपसृत्य राजानमाश्वासयन् मन्थरां प्रति ) आर्ये मन्थरे ! किमिदम् ? ।

**मन्थरा**—कुमार रामभद्द ! देवीविण्णत्तेण महाराएण एदं तुम्हाणं समप्पाविदं[१] । ( इति पत्रकं वल्कलयुगलं च समर्पयति । )

**रामः**—( गृहीत्वा पत्रकमात्मगतं वाचयति । )

वरौ पुरा केकयराजपुत्र्या, प्रत्तौ मया प्रार्थयतेऽधुनाऽसौ ।
साम्राज्यमेकेन तयोः स्वसूनोरन्येन रामस्य ....

( इति वाचयित्वा ) कथमर्द्धलिखितमेव मुक्तम् ? । ( पुनर्विमृश्य प्रकाशम् ) हुं ! परिज्ञातो वाक्यशेषः ।

**सुमन्त्रः**—( ससम्भ्रमम् ) कुमार ! कीदृशो वाक्यशेषः ? ।

**रामः**—( [2]प्रकाशम् ) पुनः किम् ?—

[3]वरौ पुरा केकयराजपुत्र्या, प्रत्तौ मया प्रार्थयतेऽधुनाऽसौ ।
साम्राज्यमेकेन तयोः स्वसूनोरन्येन रामस्य वनप्रवासम् ॥ १४ ॥

**सुमन्त्रः**—( सविषादम् ) हा ! किमेतदापतितम् ? ।

**रामः**—( सहर्षं [4]पत्रकं शिरसि कृत्वा मन्थरां प्रति ) आर्ये !

किं याचने तातमुखेन माता, स्वमर्थमाज्ञाकृति तत्सुतेऽस्मिन् ? ।
मूर्ध्ना मयाऽम्बावचनं गृहीतं, सा मे गुरुभ्योऽपि गरीयसी यत् ॥ १५ ॥

**मन्थरा**—( सहर्षमात्मगतम् ) कदं कायव्वं, जदो रामभद्दभणिदं कया वि नअण्णहा भोदि । ता गमिस्सामि[२] । ( इति गन्तुमिच्छति । )

**सुमन्त्रः**—( मन्थरां प्रति सरोषम् ) अयि कुब्जकुलकृत्ये ! कियन्ति वर्षाणि रामभद्रेण वनमनुभवनीयम् ? ।

---

१ कुमार रामभद्र ! देवीविज्ञप्तेन महाराजेन एतद् युष्माकं समर्पितम् ।
२ कृतं कर्त्तव्यम्, यतः रामभद्रभणितं कदाऽपि नान्यथा भवति । तद् गमिष्यामि ।

---

1 शतकोटि पद्यम् । 2 °तमिह मुखम् भा० । 3 ( प्रकाशं पुनः वाचयति ) वरौ भा० । 4 प्रतिक भा० ।

**मन्थरा**—चेउद्दह ! (इत्यभिधाय निष्क्रान्ता ।)

**सुमन्त्रः**—(राजानं प्रति) देव ! समाश्वसिहि समाश्वसिहि ।

**राजा**—(समाश्वस्य रामोत्सङ्गे वल्कलानि विलोक्य सविषादम् ।) कथमुपक्रान्तैव दुष्टदासिकया मम प्राणापहरणप्रकरणप्रस्तावना ? । हा वत्स रामभद्र ! कथं भविष्यामि ? । (इति पुनर्मूर्च्छितः पतति ।)

**रामः**—देव ! समाश्वस्यतां समाश्वस्यताम् । किमस्थाने शोकहुताशनाय स्वात्मानमाहुतीकरोति महाराजः ? ।

**सुमन्त्रः**—(राजानमवलोक्य सास्रम्) अहो ! [2]दुर्घटेऽपि वस्तुनि घटनापटवं दुष्टदैवस्य । तथाहि—

एकच्छत्रामवति जगतीं यश्चतुःसिन्धुसीमा-
मध्यास्ते च त्रिदिवपतिनाऽप्येकमेवाऽऽसनं यः ।
हा ! धिक् कष्टं सुचरितरतिर्निर्मितेऽत्र सोऽयं,
तोये तुच्छे तिमिरिव मुहुर्वर्त्तनोद्वर्त्तनानि ॥ १६ ॥

देव ! समाश्वसिहि समाश्वसिहि ।

**राजा**—(समाश्वस्य सविषादमञ्जलिं [3]बद्ध्वा आकाशे)

मातः क्षिते ! तपन तात ! विभो नभस्वन् !,
सर्वे हि वित्थ तदिदं वदत प्रसह्य ।
का दुर्दशेयमधुना मम वर्त्तते ? यं
न्मूर्च्छाऽऽशु गच्छति न गच्छति जीवितव्यम् ? ॥ १७ ॥

(पुनः स्मृत्वा) हा प्रिये रामभद्रजननि ! स्वयमुत्पादितव्यापादितमनोरथा विहिताऽसि दशरथहतकेन । (इति सास्रमधोमुखस्तिष्ठति ।)

(ततः प्रविशति कौशल्या साक्षतपात्रा सुमित्रा सीता च ।)

**कौशल्या**—(सहर्षं सीतायाश्चिबुकमुन्नमय्य) जादे ! अज्ज तुमए पट्टमहादेवीए भोदव्वं ।

---

१ चतुर्दश ।

२ जाते ! अद्य त्वया पट्टमहादेव्या भवितव्यम् ।

---

1 °नमाले भा० । 2 दुर्घटितेऽपि दे० । 3 बभ्नाका° भा० ।

**सीता**—( सप्र[1]मोदं सलज्जम् ) [1]अज्जयाणं पसायेण।

( नेपथ्ये क्षुतशब्दमाकर्ण्य [2]सर्वा विषादं नाटयन्ति। )

**सुमित्रा**—( सोद्वेगमात्मगतम् ) [2]जहा मंगल्लासणक्खणे छीअसद्दो तहा तक्केमि सविग्घा विय समीहिदा सिद्धी। ( प्रकाशम् ) सव्वं पि दुरिदमंतरीयदु कुलदेवयाण-मणुग्गहेण। ( इति सर्वे ( [2] सर्वा ) परिक्रामन्ति। )

**सीता**—( पुरो विलोक्य सलज्ज कौशल्या प्रति ) [3]अज्जे! इत्थ गुरुयणाणं दिट्ठि-गोयरं परिहरन्ती इध ज्जेव चिट्ठिस्स।

**कौशल्या**—[4]एवं [3]करीयदु।

( सीता स्तम्भान्तरिता तिष्ठति। )

**कौशल्या**—( परिक्रामन्ती पुरो विलोक्य ससम्भ्रम सुमित्रा प्रति ) [5]सहि सुमित्ते! अण्णरससण्णिविट्ठ व्व इत्थ अज्जउत्तो लक्खीयदि ता किं[4] ण्णिद?।

**सुमित्रा**—[6]देवि! अज्जसुमंतो वि अम्हे पिक्खिय विसण्णवयणो धरणितलं पिक्खिदुं पइट्टो। एस ज्जेव गडुय पुच्छीयदु।

( इत्युभे पर्याकुले परिक्रामतः )

**सुमन्त्रः**—( दृष्ट्वा सखेदं राजानं प्रति ) देव्याविमे समागच्छतः।

**राजा**—( विलोक्य शोकव्याकुलता नाटयन् ) सुमन्त्र! किमिदानीमपरेण? दर्शय दशरथहतकस्य प्राणपरित्यागमार्गम्।

---

१ आर्याणां प्रसादेन।

२ यथा मङ्गलाशसनक्षणे क्षुत्शब्द तथा तर्कयामि-सविघ्ना इव समीहिता सिद्धि.। सर्वमपि दुरितमन्तरीयता कुलदेवतानामनुग्रहेण।

३ आर्ये! अत्र गुरुजनानां दृष्टिगोचर परिहरन्ती इह एव स्थास्यामि।

४ एवं क्रियताम्।

५ सखि सुमित्रे! अन्यरससन्निविष्ट इव अत्र आर्यपुत्र लक्ष्यते तत् किं न्विदम्?।

६ देवि! आर्यसुमन्त्र अपि अस्मान् प्रेक्ष्य विषण्णवदन धरणितलं प्रेक्षितु प्रवृत्त। एष एव गत्वा पृच्छयताम्।

---

1 'प्रमोदल' मा०। 2 सर्वे दे०। 3 कीरदु भा०। 4 किं गेद भा०।

**सुमन्त्रः**—( सखेदम् ) देव ! को नाम सम्प्रति प्राणपरित्यागमार्गमार्गणाय प्रगुणो न भवति ? परं सर्वथा शरीरवद्भिः सोढव्यैव दृढप्रहारता कृतान्तहतकस्य । येनाधुना—

पिता गन्ताऽरण्ये, नृपतिरिह रामोऽद्य भविता,
प्रवर्त्त्यैवं वार्त्तामथ विदधता तामपरथा ।
सुधासिन्धोर्मध्ये भुवनमिदमाधाय विधिना,
ततस्तप्ते तैले कलितखलशीलेन निहितम् ॥ १८ ॥

( इत्युभावधोमुखौ तिष्ठतः । )

**कौशल्या**—( सुमन्त्रमुपसृत्य ) अज्ज सुमन्त ! किं दाणिं पमोदावसरे दुक्खावत्थेयमणुहवीयदि ? ।

**सुमन्त्रः**—( ऊर्ध्वमवलोक्य ) देवि ! यद् दैवोऽनुभावयति तदेवानुभूयते ।

**कौशल्या**—( साशङ्कम् ) अवि कुसलं वत्समरदस्स सत्तुग्घसहिदस्स ? ।

**सुमन्त्रः**—देवि ! सर्वस्यापि कुशलम्, न पुनर्दशरथमनोरथस्य ।

**राजा**—प्रिये ! न केवलं दशरथमनोरथस्य, दशरथस्यापि ।

**सुमित्रा**—( भयेन वेपमाना ) अज्ज सुमंत ! किं पि फुडमजंपंतो अम्हे बहुदरं पज्जाउलीकरेसि ? ।

**सुमन्त्रः**—( सखेदमात्मगतम् ) का गतिरिदानीम् ? । ( इति विमृश्य ) भवतु, किमन्यत् करोमि ? । ( प्रकाशमाकाशे )

दाणि ! वक्तुमिदमाशु मुग्ध मे,

( कौशल्यां प्रति )

त्वं च देवि ! हृदयं दृढं कुरु ।

( एतदेव सुमित्रां प्रति )

सोऽयमप्रतिविधानदुर्धरस्त्वां यदेति वचनाशनिर्भम ॥ १९ ॥

---

१ आर्य सुमन्त्र ! किमिदानीं प्रमोदावसरे दुःखावस्थेयमनुभूयते ? ।
२ अपि कुशलं वत्सभरतस्य शत्रुघ्नसहितस्य ? ।
३ आर्य सुमन्त ! किमपि स्फुटमजल्पन् अस्मान् बहुतरं पर्याकुलीकरोषि ।

---

1 केवल मनोरथानाम्, दशरथस्यापि मा० । 2 दृढीकुरु मा० ।

( उभे सम्भ्रान्तचित्ते तिष्ठत । )

**सुमन्त्रः**—देवि ! पूर्वप्रतिपन्नौ वरौ महाराजसकाशाद् देवी कैकेयी याचते ।

**उभे**—के [1]णाम ते ? ।

**सुमन्त्रः**—एको भरतस्य राज्याभिषेकः, द्वितीयो रामस्य वनवासः । ( इति रोदिति । )

**उभे**—हा दिव्व ! किमिद सजाद ? । ( इति मूर्च्छतः । )

**सुमन्त्रः**—देव्यौ ! समाश्वसित समाश्वसितम् । ( इत्युभे समाश्वसितः । )

**सुमित्रा**—( सबाष्पमाकाशे ) केगइ ! केगइ ! काम भोदु जादभरदो राया । किं पुण रामभद्देणावरद्ध ? जेण एसो वणवासदुक्खमणुहावीयदि ।

**कौशल्या**—सहि सुमित्ते ! ण किं पि रामभद्देणावरद्ध, मए ज्जेवावरद्ध, जीए रामभद्दो जणिदु ( त्ति रोदिति । )

**सीता**—( श्रुत्वा सविषादम् ) हा दिव्व ! पट्टमहाएविसण दसिय वणवासित्तण मह मदभाइणीए समप्पेसि । भोदु, दुल्लघणीया भयवदी भविदव्वदि त्ति ।

**रामः**—( सहर्षं अञ्जलिं बद्ध्वा राजानं प्रति ) तात ! नातः परं मम समुचितमिहावस्थातुम् । तदनुजानन्तु मां वनगमनाय तातपादाः ।

( सर्वे श्रुत्वा मुक्तकण्ठं रुदन्ति । )

**रामः**—( सर्वान् समाश्वासयन् ) क एष भवतामकारणे करुणारसाम्भोधिमध्ये झम्पापातः ? । ननु समुचितमेव विरचितमिद भगवत्या नियत्या । तथाहि—

---

१ कौ नाम तौ ? ।

२ हा दैव ! किमिद सञ्जातम् ?

३ कैकेयि ! कैकेयि ! काम भवतु जातभरतो राजा । किं पुनः रामभद्रेणापराद्धम् ? येन एष वनवासदुःखमनुभाव्यते ।

४ सखि सुमित्रे ! न किमपि रामभद्रेणापराद्धम्, मया एवापराद्धम्, यया रामभद्रः जनितः ।

५ हा दैव ! पट्टमहादेवित्व दर्शयित्वा वनवासित्व मह्य मन्दभागिन्यै समर्पयसि । भवतु, दुर्लङ्घनीया भगवती भवितव्यतेति ।

---

1 णाम ! ति द० । 2 °सित मा० । 3 °काशे ) केगइ ! सकाम भा० । 4 °वाँनाश्वा भा० । 5 °र्ण करु° मा० ।

वप्तु सत्य भवतु वचन, प्रीतिमाप्नोतु माता,
भ्राताऽसौ मे 'भजतु भरतो भारमुर्वीतलस्य ।
राम काम नवनवमहातीर्थसेवाप्तपुण्य,
स्थित्वाऽरण्ये मुनिभिरनघे सङ्गमङ्गीकरोतु ॥ २० ॥

**राजा**—( राम करे गृहीत्वा सोपरोधम् ) वत्स ! वक्तुकामोऽस्मि[2] किमपि ?।

**कौशल्या**—( सेर्ष्यम् ) जाणिद मए ज अज्जउत्तो वत्तुकामो ।

**राजा**—प्रिये ! कि तत् ?।

**कौशल्या**—तुवरिद ज्जेव मह णयर परिहरीयदु त्ति ।

**राजा**—( सखेद वैलक्ष्यम् ) देवि ! सत्यम्, कृतोऽस्मि दुर्दैवहतकेन साम्प्रत मेवविधाना वचसामहमाश्रय ।

**रामः**—( कौशल्या प्रति ) अम्ब ! किमिदमसाम्प्रत सम्प्रति मह्यासत्यादभिधीयते ?। ( पुनरपि राजान प्रति ) देव ! समादिश्यता विवक्षितम् ।

**राजा**—[3]वत्स ! मया तावद् भवते स्वराज्य मनसा पूर्वमेन प्रदत्तम् । तदनु च तया दुष्टदासीमन्त्र[4]परतन्त्रितया कैकेय्या वरद्वय याचितम् । तदहमेव वन गमिष्यामि । भवान् पुन ( इत्यर्द्धोक्ते सुमन्त्रमुख[5]मवलोकयति । )

**सुमन्त्रः**—( अभिप्रायमुन्नीय ) कुमार ! भवान् पुन पितृदत्तमात्मराज्य बलादपि गृह्णन् नापराध्यति ।

**सुमित्रा**—जाद ! सोहण मतेदि अज्जसुमत्तो ।

**रामः**—( विहस्य ) आर्य [6]सुमन्त्र ! किमिदमुदीर्यते ?। यत –
उत्पद्य वशे तुहिनेतरांशोरधीत्य विद्याश्च गुरोर्वसिष्ठात् ।
कि तत् करिष्ये भविताऽद्य येन, पि[7]ताऽस्तसत्योऽस्तमनोरथाऽम्बा ? ॥ २१ ॥

**कौशल्या**—( सकरुणमञ्जलिं बद्ध्वा राजानं प्रति ) जेदि अज्जउत्तो समादि-

---

१ ज्ञात मया यद् आर्यपुत्र वक्तुकाम । २ त्वरित एव मम नगर परिह्रियतामिति ।
३ जात ! शोभन मन्त्रयति आर्यसुमन्त्र । ४ यदि आर्यपुत्र समादिशति तदहमपि रामभद्रेण सम वनगमन करोमि । न खलु शक्नोमि पुत्रकमेकाकिन वने परिहृत्य प्रेक्षितुम् ।

---

1 वहतु भा० । 2 °स्मि सम्यक् कि° भा० । 3 वत्स रामचन्द्र ! मया दे० । 4 परतन्त्रया भा० । 5 °मुखमालो भा० । 6 सुमन्त्र भा० । 7 °ताऽप्यस° भा० ।

सदि ता अद्द पि रामभद्देण समं वणगमणं करोमि। ण खु सक्कुणोमि पुत्तयमे'गायिणं वणे परिहिदं पेक्खिदुं।

**सुमित्रा**—'देवि! कध जादरामभद्दो एगाई? जस्स लक्खणसरिसो सहयरो भोदि?।

**रामः**—(कौशल्यां प्रति) अम्ब! किमनात्मसदृशमिदमुदीर्यते?। यतः—

जनकेन जनन्या वा सूनुना बन्धुना'ऽपि किम्?।
भर्त्तैव दैवतं स्त्रीणां स्मृतं हि स्मृतिकर्तृभिः॥ २२॥

**राजा**—(सनाप्यमाकाशे) हतकैकेयि! सुमित्रावचनमेवंविधमाकर्ण्य किं न लज्जया विदीर्णहृदया भविष्यति भवती?।

**सुमन्त्रः**—न तावदयं पितृभ्यामप्रहितो वनगमनाध्यवसायाद् विरमति। तदस्य प्रतिबोधाय कुमारलक्ष्मणमनवगमितमन्थरावृत्तान्तमिहाऽऽकारयामि। स ह्यस्य प्रियतरो भ्राता सचिवश्च। (प्रकाशम्) कञ्चुकिऽत्र भो!?।

(प्रविश्य)

**कञ्चुकी**—एषोऽस्मि।

**सुमन्त्रः**—शिखानल! इतस्तावत्। (कर्णे एवमेव।)

(कञ्चुकी निष्क्रान्तः)

**कौशल्या**—(सास्रं सुमित्रां प्रति) पियसहि सुमित्ते! एक्को दाव मह पुत्तो रामभद्दो दिव्वेण णिव्वासिदो। अवरं पुण मह पुत्तयं लक्खणं तुमं णिव्वासिदुं पयट्टा सि।

(ततः प्रविशति गृहीतधन्वा सम्भ्रान्तो लक्ष्मणः कञ्चुकी च।)

**लक्ष्मणः**—(सावेगम्)

का माता? श्वसुरोर्वचांसि कुरुते दासीजनोक्तानि या,
कस्तातः? प्रमदाप्रतारितमतिर्जानाति कृत्यं न यः।

---

१ देवि! कथं जातरामभद्र एकाकी? यस्य लक्ष्मणसदृशः सहचरो भवति।

२ प्रियसखि सुमित्रे! एकः तावद् मम पुत्रः रामभद्रः दैवेन निर्वासितः। अपरं पुनः मम पुत्रकं लक्ष्मणं त्वं निर्वासयितुं प्रवृत्ताऽसि।

---

1 'गायिणं मा०। 2 'नाऽपि किं' मा०।

कश्चाय भरत ? श्रिया हन्तिविना यो रज्यते, दुर्णय-
व्यापेधार्थमधिज्यधन्विनि मयि श्रीरामभृत्ये स्थिते ॥ २३ ॥

**रामः**—( दृष्ट्वा ) वत्स लक्ष्मण ! स्वभावगम्भीरो भवान्, तत् किमर्थमस्थाने सम्भ्रमयसि ? । ननु 'साधु विहितमिदं विधिना—" वत्सु सत्य भवतु वचन०" [श्लो० २०] ( इत्यादि पठित्वा ) तदिदानीमिहावस्थितेन भवता—

मातॄणां तातपादानां कार्या तु सम्प्रतिक्रिया ।
भूपे च भरते भक्तिर्विधेया विधिवत् त्वया ॥ २४ ॥

**लक्ष्मणः**—आर्य ! न सम्यगभिहितम् । यत—

विना दिनाधिनाथेन दृश्यते यदि वासर ।
रहितो रामभद्रेण वीक्ष्यता लक्ष्मणोऽपि तत् ॥ २५ ॥

**सुमित्रा**—( सहर्षम् ) साहु सुअ लक्खण ! साहु !, तए जेट्ठभाउयाणुगामिणा तणयरयणेण विहूसिया सपदि सुमित्ता ।

**सुमन्त्रः**—न केवल सुमित्रा, भूतधात्री च ।

**रामः**—वत्स लक्ष्मण ! तदुत्सवता प्रस्तुतसविधानाय । ( इत्युत्थाय वल्कले परिदधाति । )

( सर्वे दृष्ट्वा मुक्तकण्ठ रुदन्ति । )

**राजा**—( सखेदमात्मान प्रति )

हृदय ! हृदय ! दीने मय्यनुतुष्य सन्
व्यसनघननिपातैश्चूर्णतामेहि तूर्णम् ।

( विलोक्य ) कथं वज्रपतितमिवेदमद्यापि न विदीर्यते ? । ( पुनराकाशे बद्धाञ्जलि )

भरतु मम ! नमस्या तुभ्यमभ्यर्थये त्वा,
अपहर हतक मे जीवितं जीवितेश ! ॥ २६ ॥

( इति मूर्च्छां नाटयति । )

---

१ साधु सुत लक्ष्मण ! साधु ! त्वया ज्येष्ठभ्रात्रनुगामिना तनयरत्नेन विभूषिता सम्प्रति सुमित्रा ।

---

1 धिवान्तरधिना राज्येन यो रज्यत, व्यापेधार्थमधिज्यधर्या बनि दे० । 2 साधु संवेहितमिदं विधिना चैन्द्—" वत्सुः मा० । 3 "नमिवन्ते" मा० ।

**सुमन्त्रः**—देव ! समाश्वसिहि समाश्वसिहि ।

**राजा**—( समाश्वस्य ) [1]सुमन्त्र ! किमाश्वासयसि [2]। मया हि पापीयसा समाश्वस्य साम्प्रतमेतदेव विधातव्यम् । तथाहि—

द्रष्टव्यं मुखमेतयोर्दयितयोः शोकाश्रुमिश्रेक्षणं,
श्रोतव्याः पुरवासिनामसुखिना धिक्कारगर्भा गिरः ।
दुर्दासी च दुरङ्गना च वचसा वाच्या कदाचिन्मया,
तन्मे सम्प्रति जीवितेन किमहो ! [2] मृत्युर्महीयान् मम ॥ २७ ॥

**रामः**—( शिरस्यञ्जलिं बद्ध्वा सविनयम् ) तात ! एष गच्छामि ( इति पदान्तरे स्थित्वा पुनर्विनिवृत्त्य च राजानं प्रति सोपरोधम् )

याचे किञ्चित् तात !,

( पुनः कौशल्यां प्रति )

मातस्तथा त्वां, स्मारं स्मारं मत्प्रवासं शुचाभ्याम् ।
नैराश्याया सर्वथा मध्यमाया, तत्पुत्रे वा वैमनस्यं विधेयम् ॥ २८ ॥

( इति पादयोर्निपतति । )

**राजा**—( सबाष्पगद्गदम् ) वत्स विनयैकनिकेतन ! सर्वं करिष्ये यदि जीविष्यामि ।

**सीता**—( दृष्ट्वा ) कँध पत्थिदो ज्जेव अज्जउत्तो [१]। अहं पि पदिणा समं ज्जेव गमिस्सं । ( इति हस्तसंज्ञया कञ्चुकिनमाकारयति । )

**कञ्चुकी**—( गत्वा सीतावचनमादाय राज्ञे निवेदयति ) देव ! सेयं वधूर्जनकराजात्मजा पत्या सह वनगमनोद्यता देवपादान् प्रणमति । ( इत्यङ्गुल्या दर्शयति । )

( सीता [2]दूरस्थिता सर्वान् प्रणमति । )

**राजा**—( विलोक्य ) हा [3]दुर्विधे ! नाद्यापि दशरथकदर्थनाकौतुकेषु कृतार्थता भवत । हा स्नुषे ! हा सीरध्वजनन्दिनि ! स्त्रीत्वेऽपि पतिपराधीना वरं भवती, न पुनः पुरुषत्वेऽपि [4]पत्नीपराधीनोऽहम् । ( पुनः सुमित्रां प्रति ) प्रिये ! निवार्यतामियं वधूरनर्थं बहुलस्य वनगमनस्याध्यवसायात् ।

---

१ कथं प्रस्थित एव आर्यपुत्रः ? । अहमपि पत्या समं एव गमिष्यामि ।

---

1 सुमन्त्र ! किं मां समाश्वा° मा० । 2 दूरस्था स° मा० । 3 दुर्विधे किमद्यापि न दश° मा० । 4 [illegible]पराधी° मा० ।

**सुमित्रा**—[1]जं आणवेदि अज्जउत्तो (त्ति सीतासमीपं गत्वा पुनरागत्य च) अज्जउत्त! बहुपरं पडिबोहिदा वि सुण्हा ण विरमेदि वणगमणादो। एवं च विण्णवेदि—

तं मह घरं पि रण्णं तणयरयणो ण जत्थ ससुरस्स।
रण्णं पि घरसरिच्छं गच्छंतीए समं पइणा॥ २९॥

(रामः सर्वान् प्रणम्य सीता-लक्ष्मणाभ्यां सह प्रस्थितः।)

**देव्यौ**—(विलोक्य बलाद् बाष्पं निगृह्णन्त्यौ तान् प्रति) [2]रक्खन्तु तुम्हे वणदेवदाओ। णिव्विग्घं च तुम्हाणं वणगमणं होदु।

**सुमन्त्रः**—(देव्यौ निर्वर्ण्य सकरुणातिरेकम्) अहह!—

धनाय पुत्रद्वितयेऽपि गच्छत्यमङ्गलत्वाद् विनिवारितोऽपि।
तदन्ययोरस्खलवारिपूरः, श्रवत्ययं प्रश्रयकैतवेन॥ ३०॥

**रामः**—वत्स लक्ष्मण!

तदेतद् दुःखमेकं मे यदद्य भरतो मया।
नाऽऽश्लिष्टो नानुशिष्टश्च प्रजापालनकर्मणि॥ ३१॥

**लक्ष्मणः**—आर्य! मन्थरैवानुशासिष्यति।

**रामः**—ननु किमेवमसूयागर्भमभिधत्से?। तथाहि—

वत्सस्य वेत्ति भरतस्य शुभं स्वभावं,
दोषं मृषा तदिह किं मनुषे मनीषिन्?।
कल्पान्तरेऽपि हि न लक्ष्मण! लक्ष्मपङ्क-
पिण्डेन चण्डरुचिमण्डलमाविलं स्यात्॥ ३२॥

**लक्ष्मणः**—(सवितर्कमात्मगतम्)

कुर्यादिदं न भरतोऽपि जनन्यसौ वा,
नैतद् विशुद्धिमति सम्भवति द्वयेऽस्मिन्।
तत् केन नाम कृतमीदृशमाः! किमन्यै-
र्धातैव निश्चितमचिन्त्यगतिश्चकार॥ ३३॥

---

१ यद् आज्ञापयति आर्यपुत्रः। आर्यपुत्र! बहुतरं प्रतिबोधिताऽपि स्नुषा न विरमति वनगमनात्। एवं च विज्ञपयति—

तद् मम गृहमपि अरण्यं तनयरत्नं न यत्र श्वशुरस्य।
अरण्यमपि गृहसदृशं गच्छन्त्याः समं पत्या॥

२ रक्षन्तु युष्मान् वनदेवताः। निर्विघ्नं च युष्माकं वनगमनं भवतु।

**रामः**—( नेपथ्यार्द्धे स्थित्वा रचिताञ्जलिः )

भास्वद्गोत्रचरित्रचित्ररुचिर प्रासाद ! तुभ्यं नम-

स्त्वा वन्दे सुकृतानुरक्तजनतामेध्यामयोध्यापुरि ! ।

आपृच्छे पुरवासिन ! सविनय युष्मानिहाऽऽयुष्मति,

क्ष्माभारं भरते समुद्धरति वः स्वस्त्यस्तु, गच्छाम्यहम् ॥ २४ ॥

( इति सर्वानापृच्छ्य सीतालक्ष्मणाभ्यां सह निष्क्रान्त । )

**कञ्चुकी**—( सनिर्वेदम् ) किं नाम [1]चिरं जीवितं मया मन्दभाग्येन साधितम् ? । यदिमामश्रुतपूर्वां ककुत्स्थकुलस्य दुरवस्थामवलोकयामि । भवतु । रामभद्रमनुव्रज्य समागमिष्यामि । ( इति निष्क्रान्त । )

**देव्यौ**—हा वत्स रामभद्द ! हा वत्स लक्खण ! हा महासयि सीदे ! तुम्हेहिं [2]परिच्चत्ताणम्हाणमधयारीभूदो [3]मच्चलोओ ( त्ति मुखं पिधाय रुदित । )

**राजा**—( सनिर्वेदमात्मानं दर्शयन् ) सुमन्त्र ! पश्य दशाविपर्ययमस्य पापीयसो जनस्य—

या दध्रे हृदि वल्लभेत्यजनि सा भर्त्री, सुतश्चन्दन-

स्यन्दोऽभून्मम य स एव दहति स्वान्तं वनान्तं व्रजन् ।

मृत्युर्यं स्वयमेति सोऽद्य भजते नाऽऽमन्त्र्यमाणोऽपि मां,

तन्नैमि [4]दुष्कर्मणः परिणतं कस्येदमीदृक् फलम् ? ॥ २५ ॥

( नेपथ्ये महानाक्रन्द । )

**सुमन्त्रः**—( श्रुत्वा सवेदनामाकलय्य ) हा ! धिक्, कुमाररामभद्रप्रवासाव-लोकनदुःखितानां पौराङ्गनानां महीयान्यं [5]परिदेवितध्वनि । महाराजशोकहुताशनस्य पूर्णाहुतिर्भवति ।

( प्रविश्य )

**कञ्चुकी**—( राजानं प्रति सविस्मयम् ) देव ! श्रूयतां द्वितीयस्य विजनतृतस्य माहात्म्यातिशय ।

---

१ हा वत्स रामभद्र ! हा वत्स लक्ष्मण ! हा महासति सीते ! युष्माभिः परित्यक्तानाम् अस्माकमन्धकारीभूतो मर्त्यलोक ।

1 म भा० । 2 चिरजीवित [illegible] वे० । 3 परिचत्त° भा० । 4 दुष्कर्मणः° भा० । 5 परिदेवन° भा० ।

**राजा**—( सनिर्वेदम् ) शिखावल ! [1]निवेदय त्वमेताननुव्रजत पुरजनानस्मत्प्राणेभ्यो येऽद्यापि [2]पुरोऽस्मिन्नवस्थातु समीहन्ते । ( इति मोहमुपगत । )

**देव्यौ**—( दृष्ट्वा ) हा हद ग्ह । ( इति राजान पतन्तमवष्टम्भयत । )

**सुमन्त्रः**—( कौशल्या प्रति ) देवि ! बाढमस्वस्थशरीरो राजा । तदित स्वमावास नीत्वा शयनीये समारोप्यताम् । ( पुन पार्थिव प्रति ) देव ! केय विक्लवता [1] । ननु धुर्योऽसि धैर्यवताम् ।

**राजा**—( किञ्चिदाऽऽश्वस्य ) हा ! राम ! राम ! ( [3]इति विलपन् देवीभ्यामवष्टम्भ्यमानो निष्क्रान्त । )

**सुमन्त्रः**—( समन्तादयोध्या निध्याय ता प्रति )

*मातर्मन्ये नगरि ! गरिमा रामभद्रेण सार्द्धं,*

यातस्तेऽपि त्वयि यदधुना वीतगीतोत्सवायाम् ।

आकर्ण्यन्ते ककुभि ककुभि क्रन्दितान्यङ्गनाना,

आलोक्यन्ते पथि पथि तथा लोकशोकाश्रुपङ्का ॥ ३९॥

( पुन कञ्चुकिन प्रति ) शिखावल ! तदिदानीं भवताऽपि गत्वाऽभिधीयतामार्य वामदेवो यथा कुमारभरतमस्माकारणाय दूत प्रेषयति ।

( प्रासादमालोक्य च सकरुणम् ) शिखावल ! सम्प्रति शोकव्याकुलेऽत्र राजकुले—

कीराद्ये पञ्जरक्षिप्ते क्रिमेभि केलिपक्षिभि [1] ।

तस्मादमी विमुच्यन्तां सम्बध्यन्तां च बन्धुभि ॥ ४० ॥

अहमपि कुमाररामभ[4]द्रमापृच्छ्य समागच्छामि ।

( इति निष्क्रान्ता सर्वे । )

॥ **तृतीयोऽङ्कः समाप्तः** ॥

भरद्वानारयाने भ्रमयति जाने श्रवणयो

र्निर्ण कर्णोऽभूद्दानि गलितश्रीर्धीरपि ।

अनल्पप्रत्युत्पचेतस्तव सचिवकल्पद्रुम ! पुरो,

विधत्ते वैदग्धीं न च सुरगुरुर्नाऽसुरगुर ॥ १ ॥

---

१ हा ! हले स्व ।

---

1 निवेदय भा० । 2 पुरेऽस्मिन्नवस्थातुमा° भा० । 3 इति जल्पन् द दे० । 4 °भद्र समापृ° दे० ।

# चतुर्थोऽङ्कः ।

( ततः प्रविशति विमानस्थितो गन्धर्वराजः । )

**गन्धर्वराजः**—( सौत्सुक्यम् ) अद्य मया कनकचूडाभिधानो निजनन्दनश्चिरकालादवलोकनीयः । स हि पूर्वं सञ्जीवकासरविच्युतो भगवतस्त्रिविष्टपाधीश्वरस्य शापेन महाराजदशरथावसथे क्रीडाशुकतामनुभवन्नासीत् । स च शापो रामभद्रस्य वनप्रवासदिवसावधि मदुपरोधाद् देवेन सुधाशनाधिपतिनाऽप्यनुमेने । तत् [1]कथमिदानीमपक्रान्तेऽपि तस्य प्रवासरासरे निजात्मजं न पश्यामि ! । ( इति परिक्रामितकेन दिशोऽ[2]वलोकयन् ) अये ! सेयमयोध्या नाम नगरी महद्धधाममन्ततानमानवेश्वराणाम् । ( समन्तान्निर्वर्ण्य तां प्रति सनिर्वेदम् )

सौन्दर्यं परमं, समृद्धिरधिका, पौराऽयसम्पादितः
पौराणां प्रमदः स कश्चिदमरस्थानेऽपि जाने न यः ।
एवं राघवराजधानि ! शतधा यस्या त्वयि प्रेक्षितं,
दैवात् सम्प्रति सैव देवि ! भवती दीना दशामाश्रिता ॥ १ ॥

तदिहावलोकयामि । ( इति तथा करोति । )

( ततः प्रविशति कनककचूडः । )

**कनककचूडः**—अहो ! सुदुस्त्यजा सङ्गतिः सत्पुरुषाणाम् । तथाहि—
यद्यप्यद्य सुरसन्महाशापपाशास्तथापि,
स्मारं स्मारं दशरथकृतं लीलया लालनं तत् ।
मोक्षप्राप्तोऽपि रघुतनये स्नेहपाशेन बद्धः,
सौधं [3]नैतन्नृपतिनगरोमस्य [4]शक्नोमि मोक्तुम् ॥ २ ॥

( इति मन्दं मन्दं परिक्रम्यसमनो विलोक्य ) अये ! कथमेते नानाकुसुमाकरपादाः प्रतिदिशं 'मम विलोकनकौतुकेन इतं दिगन्त' पुनः एव वर्तन्ते' । तदुपसृत्य प्रणमामि । ( इति तथा कृत्वा ध्यानं मुश्चति । )

**कुमुदाङ्गदः**—( सहसा ससम्भ्रमं पुत्रमालिङ्ग्य ध्यानमुन्मज्जन् मानसम् ) नियतमद्य

1 [illegible] भा० । 2 [illegible] भा० । 3 [illegible] भा० । 4 [illegible] भा० ।

चिरकालादनुभूतं शापदुःखमश्रुपातेन प्रकाशयति । अथवा युक्तमिदम् । यतः —

प्रकटयति हृदय[1]दाहं पुरुषः प्रायेण सज्जने मिलिते ।
ग्रावा दग्धः सलिले पतिते पुनरुद्वमत्यग्निम् ॥ ३ ॥

( प्रकाशम् ) अयि वत्स कनकचूड ! निरतशापोपतापः सम्प्रति कुशली भवान् ? ।

**कनकचूडः**—( सोद्वेगम् ) तात ! किमेकाकिनो मे कुशलेन ? मेदिन्याम-कुशलिन्याम् ।

**कुमुदाङ्गदः**—वत्स ! सत्यमेवैतत् । रामभद्रे व्यसनार्णवनिमग्ने कुतः कुशलं प्रजानाम् ? ।

**कनकचूडः**—तात ! सम्प्रति पुनर्विशेषतो रामपितरि पार्थिवप्रद्योतने लोकान्तर-मुपगते ।

**कुमुदाङ्गदः**—कथं प्रस्थित एव त्रिदिवपथे स पृथिवीपुरन्दरः ? ।

**कनकचूडः**—अथ किम् ? ।

**कुमुदाङ्गदः**—( सखेदम् ) हा [2]महाभाग दशरथ ! त्वया विना विनाथा खल्वियं वसुमती निराधारश्च धर्मव्यवहारः, विगतसाहाय्यकः सम्प्रति सुरनायकश्च । ( इति शोचति । )

**कनकचूडः**—तात !

तातेन स्तुमहे महेशमहिता प्रागेव याता पुरी,
यस्मादस्तमिते महात्मनि हहा ! तस्मिन्ननन्याऽऽत्मने ।
स्नाता [3]दुस्तरशोकजैर्नयनभ्रष्टैर्जलैर्बिभ्रती,
शुभ्रं कीर्तिपटं प्रियेण रहिता भूरद्य दृष्या न यैः ॥ ४ ॥

**कुमुदाङ्गदः**—वत्स ! कथमिव दिवस्पतिपत्तनप्रणयी स पार्थिवेन्द्रः संवृत्तः ? ।

**कनकचूडः**—तात ! अथैव राघवमनुव्रज्य समायाते तत्र महामन्त्रिणि [4]सुमन्त्रे तद्वचनाकर्णनोद्गीर्णशोकाश्रुधारे शुद्धान्तपरिवारे प्रवर्धमाने च निशीथसमये—

श्रुत्वा [5]सुमन्त्रवचनेन सुतप्रणामं,
शापस्य तस्य च विचिन्त्य विपाकवेलाम् ।

---

1 °दाहं प्राय पुरुषाऽपि सज्जने भा० । 2 महाराज दश° भा० । 3 दुस्त्यज°भा० । 4 सुमन्त्रे भा० । 5 सुमन्त्रवदनेन भा० ।

हा राघवेति सकृदुच्चरितं नृपेण,
निश्वस्य दीर्घतरमुच्छ्वसितं न भूय ॥ ५ ॥

**कुमुदाङ्गदः**—वत्स ! युक्तमिदम्—यदेते विशुद्धबुद्धय कर्माणि निर्मूलयितुमुपक्रमन्ते, यत्सम्बन्धादेवनिधानामपि पुरुषविशेषाणा[1]मीदृशमसमञ्जसमाविर्भवतीति । तदनन्तरं च किमभूत् ? ।

**कनकचूडः**—ततश्च देवी कौशल्या पत्यपत्यवियोगहृद्रोगाज्जीवितमुन्मुञ्चतीमवगम्य भगवता मैत्रावरुणेन निजकलत्रमरुन्धती मूर्त्या वर्तमाना तपःसिद्धिरिव तत्प्रतिबोधनाय प्रेषिता । तया च सा महाराजमहिषी बाष्पापनोदपूर्वमेवं बभाषे—अयि वत्से ! केशवाशप्रसविनि ! पतिव्रतापताके ! कृतं शोकावेगेन । यतः—

विधिरयमविधेयस्तत् त्वया सेयमम्ब,
प्रकृतिरिह निषद्या कानिचिद् वासराणि ।
तदनु तनुजनश्रालोकनि धीरचित्ता,
पुनरनुभवितासि त्वं स्नुषाभक्तिहर्षम् ॥ ६ ॥

(इत्यभिधाय गुरुपत्न्यामुपरान्तायामाशातन्तुनिबद्धहृदया कोसलेश्वरदुहिता जीवन्मृतप्राया कालयापनां कुर्वाणा वर्तते । )

**कुमुदाङ्गदः**—वत्स ! कृच्छ्रेषु प्रपन्नानां सर्वहृदयानामाशाभिधानमस्त्येव प्रधानमवलम्बनम् । ततस्ततः [2] ।

**कनकचूडः**—अथ दशरथविपत्तिदुःखितं परिजनं पश्चाद् विमुखेन मयाऽपि शापसम्पादितं तत् वीरशरीरं सरयूसलिले समुन्मज्य प्राप्तस्वर्गीयवपुषा निजनिवासगमनोत्सुकेन मीनरूपधारिण्यौ देवराज-धर्मराजनगर्यावयोध्यामन्दनो निष्क्रामन्त्यौ विलोकिते ।

**कुमुदाङ्गदः**—ततस्ततः [3] ।

**कनकचूडः**—तात ! मानदः तयोः परस्परं विश्रम्भभाषितानि शुश्रूषुरनुसरन्नस्मि तावदमरावत्या पौरेव राजधानी इत्यभिहिते—सखि यमनगरि ! सम्प्रति मया पतिवियोगविधुरमयोध्यां प्रतिबोधयितुं सर्वा अपि देवनन्देवनगर्यः सम्भूय समायाता ददृशिरे । परमत्र नारकोत्तिता दृष्टा । तत् माऽपि तथा इति प्रयुक्ते—देवि ! मया समागच्छन्त्या समाचरितैव माऽपि तत्पुरेऽस्मनगरी । परं साम्प्रतमसौ त्रिभुवनविहारिणो

1 'मीदृशमसमञ्जसमाविर्भवति' द० । 2 'रसौ परिकथ' मा० । 3 'मनसमनुसर' द० ।

**कनकचूडः**—तयोरथ देवनगर्योर्निजनिजावासं प्रति प्रस्थितयोरहमयोध्यासविधे शत्रुघ्नसहितमविदितवृत्तान्तं कुमारभरतमागच्छन्तमालोकितवान् ।

**कुमुदाङ्गदः**—(ससम्भ्रमम्) कथमविदितवृत्तान्तो भरतः समागतः ? । (पुनः सकरुणम्) हा महासत्त्व भरत ! किमिहागतः श्रोष्यसि वक्ष्यसि वा ? । ततस्ततः ? ।

**कनकचूडः**—ततः कुमारभरतेन चिन्ताक्रान्तचेतसा शत्रुघ्नस्तदेतदभिदधे—वत्स शत्रुघ्न ! साम्प्रतमहं दुःस्वप्नदर्शनाद् आर्यभरणरामराज्याभिषेकश्रवणाच्च विषपीयूषयोरास्वादनमेककालमनुभवन्नस्मि । तथाहि—

तापयत्यसुखवह्निना मुहुः, धर्मवारिणि मुहुश्च मुञ्चति ।
अद्भुतार्थघटनापटुः स्फुटं, लोहटङ्कमिव मामयं विधिः ॥ १२ ॥

ततश्च 'कीदृशो दुःस्वप्नः ?' इति सम्भ्रमवति शत्रुघ्ने पर्यनुयुक्तो भरतः पुनरेवमभ्यधत्त—वत्स ! यद्यपि दुःस्वप्नोऽयमनाख्येय तथापि तत्प्रतीकारजिज्ञासया कथयामि । अद्य किल स्वप्ने—

पिता दृष्टः श्लिष्टः विकनिकरशान्त्या वनितया,
मुखं मातुर्मध्या कलुषरुचि केनापि च हृतम् ।
नदे मग्नोन्मग्नो रघुपतिरभूद् गोमयमये,
तनुस्तैलेनाक्ता जनकतनुजायाश्च, किमिदम् ? ॥ १३ ॥

**कुमुदाङ्गदः**—ततस्ततः ? ।

**कनकचूडः**—तात ! तद्वचनमाकर्ण्य शत्रुघ्नोऽपि साशङ्कं 'सत्यत्वदुर्ग्याविनिष्टसूचकोऽयं दुःस्वप्नः' इति स्वगतं विचिन्त्य च प्रकाशं पुनरुवाच—आर्य ! श्रीकण्ठवैकुण्ठप्रभृतिदेवताभिधानसङ्कीर्तनेन पवित्रेतिहासश्रवणेन च दुःस्वप्नोऽयं शुभोदर्कः सम्पद्यताम् । तदनन्तरं च तावुभावपि निजदर्शनपराङ्मुखमश्रुमुखं च पुरीपरिसरलोकमवलोक्य विशेषादुद्विग्नमानमारभेताम् ।

**कुमुदाङ्गदः**—ततस्ततः ? ।

**कनकचूडः**—अथैतयोः कुशलकुशलप्रश्नप्रतिवचने कृतमौनमपि जनमादरेण पर्यनुयुञ्जानयोरेकेन केनापि स निखिलोऽपि राजवृत्तान्तः समावेदितः ।

---

1 °जनिवास मा० । 2 °रत समाग° मा० । 3 °मधोमुख मा० । 4 °लोकविलो° मा० ।
5 तदेतयो कुशल मा० ।

**कुमुदाङ्गदः**—(सखेदम्) हा! कथमेतयोरपि हृदये समारोपितेयमङ्गारशकटी। तत् किमध्यवसितं भरतेन[1]?

**कनकचूडः**—तत —

मातुश्च मन्थरायाश्च पितुश्चाऽऽकर्ण्य तत् तथा ।
त्रपा प्रकोप शोकानां भाजनं भरतोऽभवत् ॥ १४ ॥

अपरमपि हृदयोद्वेगकरमिदमावेद्यते—

दूरान्निरस्य भरतेन तदाऽऽत्मधैर्यं
मन्तोकशोकविकलेन तथा व्यलापि ।
गम्भीरगह्वरगुरुप्रतिशब्ददम्भा
दाभिर्यथा प्ररुदितं हरिदङ्गनाभिः ॥ १५ ॥

**कुमुदाङ्गदः**—(सखेदम्) हा सरलस्वभाव भरत! निरपराधो निगृह्यसे कृतान्तहतकेन।

**कनकचूडः**—तात! कः खलु[2] तस्य विधेरभिप्रायपरिज्ञानप्राज्ञो भवितुमर्हति? यः किल—

अवदतामपि दुर्वचनं क्वचिन्निदधतामपि साधुपथे पदम् ।
जनयति व्यसनं तदसौ विधिर्भवति यन्महतामपि दुस्तरम् ॥ १६ ॥

**कुमुदाङ्गदः**—वत्स! किमेवमति विहितं शत्रुघ्नेन?

**कनकचूडः**—तात! यत् किल लक्ष्मणानुजेन विधीयते। तथापि व्यक्तं विज्ञपयामि—

रामं प्रव्रजितं वने, पितृवने यातं च तातं नृपं,
श्रुत्वा शोकसमाकुलेन मनसा दूरादयोध्यां त्यजन् ।
पाणेर्धन्य कृपाणिका गलतलात् पाशं गलान्निघ्नता,
शत्रुघ्नेन निवारितं कथमपि भ्राता स्वघातामहात् ॥ १७ ॥

**कुमुदाङ्गदः**—साधु सौमित्रे! [3]साधु विहितं भवता, यदयं शोकावेशेन स्वघातपातकमाचरन् निजाग्रजन्मा निवारितः। ततस्ततः?

---

1 'गकारिणामद' भा०। 2 'तु विज्ञस्तत्त्वाभिया भा०। 3 साधु विहितं भा०।

**कनकचूडः**—ततस्तावयोध्यायामप्रविश्यैव रामानुगमनार्थं प्रस्थितौ । तदनु च तातपादानहमवलोकितवानस्मि ।

**कुमुदाङ्गदः**—वत्स ! तदिदानीं पवित्रतीर्थावलोकनेन स्वात्मानं कृतार्थयन्तस्त्वद्दर्शनोत्कण्ठितकुटुम्बजनं निजनगरमेव गच्छाम इति ।

( उभावाकाशे विमानेन परिक्रामतः । )

**कनकचूडः**—तात ! प्रणम्यतामियं भगवती साकेतसीमन्तिनीकेलिदीर्घिका सरित् ।

**कुमुदाङ्गदः**—( तथाकृत्वा पुनः सविनयम् )

नदी मुदे स्तात् सरयूरियं मे, [1]महीभुजां भानुकुलोद्भवानाम् ।
श्रेयःश्रिये यज्जलविप्रुषश्च, भवन्ति मैत्रावरुणाशिषश्च ॥ १८ ॥

**कनकचूडः**—( पुनरन्यतो विलोक्य ) तात ! सेयं महास्रवन्ती तमसा नाम, तदभिवन्द्यताम् ।

**कुमुदाङ्गदः**—( तां प्रति सप्रश्रयम् )

वन्दे तव प्रवाहं तमसे ! तमसेऽवनीयमशुभवताम् ।
यस्मिन् निमज्ज्य न पुनर्भवप्रवाहे पुमान् पतति ॥ १९ ॥

( पुनरग्रतो गच्छन्नवलोक्य सहर्षम् ) वत्स ! सफलीक्रियतामियमस्मतो नयनद्वयी भगवत्या भागीरथ्याः प्रवाहावलोकनेन । ( शिरस्यञ्जलिं बद्ध्वा तां प्रति )

मातर्मद्रापातकपातदक्षे !, दक्षारमजावल्लभवैजयन्ति ! ।
अनेकजन्मोपचितैस्तपोभिर्मयाऽद्य मन्दाकिनि ! वन्दिताऽसि ॥ २० ॥

**कनकचूडः**—( कृताञ्जलिस्तां प्रणम्य सप्रमोदम् )

यातैव पातककथा नरकव्यथाना,
क्षीणः क्षणोऽनगणिनाश्च कृतान्तदूताः ।
विध्वस्तदुस्तरपुनर्जननप्रसङ्गे !,
गङ्गे ! गताऽसि यदि दृष्टिपथं कथञ्चित् ॥ २१ ॥

**कुमुदाङ्गदः**—( निपुणं निरूप्य ) वत्स ! योऽयं जह्नुकन्याकूले नेदीयानिङ्गुदीपादपस्तन्मूले नियतमेकरात्रमुषितवतः सीतालक्ष्मणसहितस्य रामभद्रस्य सद्यप्रवासचिह्नान्यभिव्यज्यन्ते । तथाहि—

---

1 भूमीभुजां भा० ।

प्रत्यग्रं तृणसंस्तरत्रयमिदं, वृत्ताऽनुवृत्तिं जने
याते यानककुद्मता पुनरसावार्द्रः करीषोत्करः ।
शोषं पोषति नाधुनाऽपि पथिकस्त्रैणाऽश्रुधाराकृत
पङ्कोऽयं, विहगा मृगाश्च त इमे तूष्णीं तथैवाऽऽसते ॥ २२ ॥

(पुनरन्यतो दर्शयन्) वत्स ! तदेव निषादाधिपतेर्गुहस्य शृङ्गवेरं नाम नगरं नयनयोरानन्दमुत्पादयति । (पुनः ससम्भ्रमम्) परमत्र क्षत्रियगणाः कुतोऽपि कारणात् प्रथमं समराय संरम्भं पश्चादुपशान्ततदारम्भा इव विभाव्यन्ते । तथाहि—

कवचनिचयं मुञ्चन्त्येके निजाङ्गनिवेशितं,
शरधिषु शरान् न्यस्यन्त्यन्ये शरासनसहितान् ।
अयमधिपतिः पुर्याः शौर्यप्रियान् पृतनाजनान्,
उपरतरणोत्साहः प्राह प्रयात गृहानिति ॥ २३ ॥

तत्कथमेतदवगमिष्यामः ? ।

**कनकचूडः**—(दूरादवलोक्य) तात ! नगरमध्यात् कश्चिदभिमुखं पुरुषः समागच्छन्नस्ति । तदेतस्मादेव वृत्तान्तमुपलप्स्यामहे । (इति विमानादवतीर्य परिक्रामति ।)

(ततः प्रविशति पुरुषः ।)

**पुरुषः**—(सनिर्वेदम्) अहह ! [2]मिथ्याभिशापहुताशनेन दन्दह्यमानमानसस्य कुमारभरतस्य [3]सम्प्रति काऽपि महती दुरवस्था वर्तते । यदसौ रामगमनमार्गपर्यनुयोगेऽपि नगरजनं मौनिनमालक्ष्य सविषादमेवं जगाद—

स्तुते[4]र्न गेहेऽस्य हतोऽस्मि मात्रा, मुहुर्मुहुर्व्याहरता जनानाम् ।
धिक्कारवाक्यान्यपि निष्ठिनानि, तिष्ठन्त्यमी तन्मयि बद्धमौनाः ॥ २४ ॥

(इति परिक्रामन्नग्रतो विलोक्य ससम्भ्रमम्) अये ! कोऽयं पुरुषविशेषो विमानादवतीर्य मामभ्येति । तदेनं प्रणमामि । (इति तथा करोति ।)

**कनकचूडः**—(उपसृत्य) भद्र ! कथय । कुतः कारणादयं समरसमारम्भः ? कुतश्च विरामः ? इति ।

**पुरुषः**—महाभाग ! गुहनामा रामभद्रस्य प्रियमित्रमत्र शृङ्गवेरनगरे नरेश्वरः ।

---

1 वत्स । न दे० । 2 °ष्याभिशापहु° द० । 3 सम्प्रति महती काऽपि दुरवस्था वर्तते । तदसौ भा० । 4 °र्न गेहेऽस्मि हतोऽस्मि मात्रा भा० ।

स च—

कैकेयीतनयः सम पुत्रतया रामाय वामाशय,
सोऽभ्येतीति भृशं बभूव भरतद्रोहे गुहः साग्रहः ।
पश्चात् तं च शुचिं विचिन्त्य विनयाश्रीच निरस्तासिना,
हस्तेनापनिनाय सादरमसौ म्लायन्मुखस्तन्मुखात् ॥ २५ ॥

**कनकचूडः**—ततस्ततः ।

**पुरुषः**—तदनन्तरमसौ कृतप्रावर्णकादिसत्कारः पुनरपि भरतं प्रत्येवमुवाच—

वीर ! त्वय्यधीयत मया हृदयं विरुद्धं, शुद्धाशये यदधुना त्वयि रामभक्त्या ।
तन्मृष्य'तामिति नमन्नमुनोपगूढः, सेष व्यमुञ्चत निषादपतिर्विषादम् ॥२६॥

**कनकचूडः**—ततस्ततः ।

**पुरुषः**—ततश्च भरतः प्रियसुहृदि गुहे विहितविश्वासस्तामात्मीयहृदयवेदनामुन्मुद्रयन् कैकेयीमुद्दिश्य क्रोधावेशादिदमाचचक्षे—

न स्त्री च मातृत्वभयं स्वभर्तृविनाशनिघ्ना मम निघ्नतस्ताम् ।
माताऽमुना मे निहतेति जातशोकात् पुनः सैव बिभेमि रामात् ॥ २७ ॥

ततस्तेन निषादाधिपतिना पर्यवस्थापितहृदयस्तदुपनीतामिस्तरीभिः सुरतरङ्गिणीमुत्तीर्य भरतो भरद्वाजाश्रमदर्शनपवित्रितश्चित्रकूटकटके कृतकुटीरकरामपादप्रणमनार्थं प्रतस्थे ।

**कनकचूडः**—भद्र ! तदधुना निजव्यूहं समीहितसिद्धये साधयतु भवान् ।

(पुरुषः प्रणम्य निष्क्रान्तः ।)

(कनकचूडोऽपि पुनर्विमानमारुह्य अन्यकार्यमर्थमावेदयन् परिक्रामति ।)

**कुमुदाङ्गदः**—(पुरो विलोक्य सानन्दम्) वत्से ! सेयं कलिन्दशैलसम्भवा शैवलिनी विलोक्यते, तत्नमस्यताम् । (इति तथाकुर्वन् तां प्रति)

कालिन्दि ! यस्त्वयि नभोमणिसम्भवायां,
स्नानं करोत्यनिमिषीभवति ध्रुवं सः ।
तीर्थे त्वमन् सुखमयून् जगदेकमातः !,
यत्रात्मनि . . . मिदं यदेति ॥ २८ ॥

---

1 'तामिति पदममुनो' मा० । 2 'कार्य तमर्थं' मा० ।

( सप्रश्रयमञ्जलिं बद्ध्वा )

केलिं कालिन्दि! य कृष्णे प्रवाहे कुरुते तव ।
स वेगेन हृतोद्वेग कृष्ण स्यादिति नाद्भुतम् ॥ २९ ॥

**कुमुदाङ्गदः**—( दूरतो दर्शयन् ) वत्स! स एष ससारज्वरापहारी पवित्रतैकपात्र प्रयागप्रदेश । यत्र किल—

*गाहन्ते त्रितयमिद महानदीनामग्नीना त्रितयमुपासते च तेऽमी ।*
देवाना त्रितयमुपेत्य यजन्ते, वेदाना त्रितयमधीयते च नित्यम् ॥३०॥

अपर च भगवता भरद्वाजेन परिगृहीतस्य भूविभागस्य सौभाग्यपरभाग परिभाव्यताम्—

देशोऽय दिशति दृशोर्मम प्रमोद,
होमाग्निप्रसृमरधूमधूसरोऽपि ।
यन्मध्ये मुनिनिवहा प्रवाहनित्ये,
ससारे विहितविरक्तयो वसन्ति ॥ ३१ ॥

**कनकचूड**—( दृष्ट्वा ) तात! सत्यमाश्रमपदमेवैतत् । तथाहि—

वृक्षा पुष्पफलोज्ज्वला, मृगकुलान्यत्रासमत्राऽऽसते,
क्रीडन्ते क्रतुकर्मभिश्च शिशव, कीर्णा कुशा काश्यपा ।
यागाभ्यागतजन्मभिर्द्विरदनस्तम्भश्रिय बिभ्रता,
यूपाना पटलेन सङ्कुलतया सेय वसन्ती पुर ॥ ३२ ॥

**कुमुदाङ्गदः**—( निपुण निरूप्य ) वत्स! सोऽयमपर इव परमेष्ठी नैष्ठिकनिवहश्रेष्ठ कृष्णाजिनोपरि विरचितासन सर्वतो धर्मकथाबुभुत्सुभिस्तपोधनैरुपास्यमानो भगवान् भरद्वाज । किञ्च—

निर्वैर जाह्नवीस्नानमश्वमेध क्रिया विना ।
यस्मिन् नमस्कृतेऽपि स्या महर्षि सप वन्द्यताम् ॥ ३३ ॥

( इति विमानस्थितावेव तथाकृत्वा परिक्रामत । )

**कुमुदाङ्गद**—( पुरो विलोक्य सानन्दम् ) वत्स! सोऽय समीपवर्ती चित्रकूट नामा शिलोच्चयचक्रवर्ती लोचनयोरवलोकनकुतूहलमुत्पादयति । तथाहि—

गात्रै विस्तरलोपिता फलभरप्राग्निष्णुभि पादपे,
केषामेव मनासि नापहरति श्रीचित्रकूटाचल ! ।

तदनन्तर यावदसो पूज्यपुरुषै प्रयुज्यमानोऽपि लज्जया रामभद्राय निजमानन दर्शयितु मशक्नुवन्नप्रन परिक्रामति, तावद् भगवता मैत्रावरुणेन तदवस्थासूचक श्लोकद्वय समर्प्य रामभद्रसमाकारणाय स्वशिष्य प्रेषित ।

**कुमुदाङ्गदः**—ततस्तत ? ।

**मुनिकुमारकः**—ततश्च रामभद्रोऽपि कुलपुरोहितशिष्यसमर्पित श्लोकद्वय सबहुमानमादाय वाचितवान्—

उच्चै पश्यति चेत् तदाऽन्वयगुरुर्देवोऽस्ति तत्रार्यमा,
नीचर्यद्यवलोकते तदवनि, सीता सवित्री पुर ।
चक्षुर्न प्रददाति दिक्षु यदिमा सत्पूरुषै पूरिता,
ह्रीतो राम ! भवन्तमेव भरतश्चित्तस्थमन्विष्यति ॥ ३६ ॥

अपर च—

नाश्नाति किञ्चन, न येन सह ब्रवीति,
निद्राति न क्वचन, किञ्चन वीक्षते न ।
कार्यान्तरादुपरतो भरतो मुहुस्त्वा-
मध्येति नि श्वसति मुञ्चति चाश्रुपूरम् ॥ ३७ ॥

तत् त्वया स्वयमागत्य निरपराधोऽयमगाधे दु खमहोदधौ निमज्जन्नुद्धरणीय । इति वाचयित्वा वशिष्ठवचनप्रतीते स्वगुरुभ्रातृशोकनोत्कण्ठी सीतासौमित्रिसखो राम स्वयमेव तत्र जगाम ।

**कनकचूडः**—तदनन्तर च किमभूत् ? ।

**मुनिकुमारकः**—अथ शोभानम्योचितमुपविष्टेषु शिष्टवर्गेषु—

निवेदिते पार्थिवपुत्रवान्ते, वान्ते क्षणाम्भःप्रसरैश्च कैश्चित् ।
हा तात ! हा वत्सल ! हाऽधिपेति, जाता [1]क्षितश्रोत्रगिरा गिरा ॥३८॥

**कुमुदाङ्गदः**—( सखेदम् ) अहह ! सोऽयमपरो [2]रामभद्रस्य कृशानाविधनप्रक्षेप । ततस्तत ? ।

**मुनिकुमारकः**—ततश्च विहितापस्नानविनापादिक्रियेषु सीतारामसौमित्रिषु ससाग सारतापप्रश[3]शनै पुराणेतिहासप्रपञ्चने प्रतिबोधयत्सु तपोधनप्रधानेषु प्रत्यासन्नोपविष्ट लक्ष्मण प्रति [4]भरतेन सरोदमित्थमिदधे—

1 क्षत॰ भा॰। 2 ॰रामभद्रस्य व कृशानावि घन॰ भा॰। 3 ॰शनै पुराणेतिहास वचनै भा॰। 4 भरत स॰ भा॰।

नेत्रे निमील्य, निमील्य[1] पापिन मा
मालोक्य मा त्वमपि लक्ष्मण ! पातकी भूः ।
त्वां प्रेक्ष्य साम्प्रतमहं पुनरार्यपाद-
सेवाप्रवृद्धसुकृतः सुकृती भवामि ॥ ३९ ॥

ततस्तेनापि त प्रत्येवमूचे—
अनार्यमेतत् त्वयि नाऽऽर्य ! कर्म, सम्भाव्यते पङ्क्तिरथप्रसूतौ ।
( पुनर्वशिष्ठं दर्शयन् )
प्रतीतिरेषेव परा महर्षियदेष ते पुष्यति पक्षपातम् ॥ ४० ॥

**कुमुदाङ्गदः**—ततस्ततः[2] ।

**मुनिकुमारः**—तदनु च रामभद्रो भरतमालिङ्ग्य सस्नेहोपचारमिव व्याजहार—वत्स विशुद्धाशय ! किमेवमधोमुखस्तिष्ठसि ? इति भरतस्य मुखमुन्नमितवान् । ततश्च—

उद्भूतं भरतस्य बन्धुविरहाद् बाष्पं, निरादीनने
दीनं जल्पति चात्र तत्करुणया रामस्य च प्रोद्गतम् ।
गाढोद्गारमुपाचकार सहजस्नेहोत्थितान्तर्व्यथं,
भ्रातृद्वन्द्वदशावलोकनगलन्नेत्रः सुमित्रासुतः ॥ ४१ ॥

**कुमुदाङ्गदः**—सौम्य ! सदृशमेतत् सहजसौहार्दस्य । ततस्ततः ? ।

**मुनिकुमारः**—ततश्च भरतरामभद्रयोः परस्परमात्माभिप्रायसमर्थनसंवादेन यदभूत् तदाकर्ण्यताम् ?—

नैर्नाम न प्रमुदितं तदिदं विलोक्य,
वृत्तं तयोर्दशरथात्मजयोस्तदानीम्[3] ।
पादौ विधृत्य च विधृत्य करौ च राज्य-
मेकः समर्पयति नाऽऽद्रियते द्वितीयः ॥ ४२ ॥

तदीदृशे सति तयोः सत्यैकनिरतयोर्मगता भास्करान्वयसौमन्तिकेन मिथो व्यवस्था कृता—रामभद्रस्य स्ववचनप्रतिज्ञातश्चतुर्दशवर्षावधिर्वनवासः, भरतस्य च रामचरणशुश्रूषाभिलाषिणो महर्षिशरभङ्गप्रेषितस्य तत्पादुकाद्वितयस्योपासनम्, शत्रुघ्नस्य साकेतपरिरक्षणमिति।

**कनकचूडः**—ततस्ततः[1] ।

1 'स तात ! मा मामालो' मा० । 2 'चित तद्विधप्रातृ' मा० । 3 'परिज्ञा' दे० । 4 'वैनप्रवास' दे० ।

**मुनिकुमारः**—तदनन्तर भरतोऽपि तत्पादुकाद्वितयमादाय तदिदं प्रतिज्ञातवान्, यद्—मया रामभद्रानुगामिनैवायोध्याया प्रवेष्टव्यमिति ।

**कनकचूडः**—ततस्ततः [1] ।

**मुनिकुमारः**—ततस्तत्कालमेव जटावल्कलधारी नन्दिग्रामगमनार्थमापृच्छमानो [भरत] जानकीरमणस्य चरणौ प्रणमन्नश्रुप्रवाहेण प्रक्षालितवान् ।

**कुमुदाङ्गदः**—(सानन्दम्) तदिदं साधु कृतं सुकृतैकरतेन भरतेन । यत —

मौलौ बभार भरत किल यज्जटानां,
जूटं तदात्मचरिते मुकुटं बभूव ।
रामं नमन्नमुचदश्रुजलं यदासीत्,
तेनास्य कलुषपरागपरागशान्तिः ॥ ४३ ॥

ततस्ततः [1] ।

**मुनिकुमारः**— ततश्च लक्ष्मणपरिरम्भणादनन्तरं वैदेहीं प्रणमति भरते यदभूत् तदाकर्ण्यताम्—

मूर्ध्ना बद्धजटेन वल्कलभृता देहेन [2] पादानतिं,
कुर्वाणे भरते तथा प्ररुदितं तारस्वरं सीतया ।
येनोद्विग्नविहङ्गसङ्गततरुर्नि नम्रदक्षापदं,
शैलेन्द्रोऽपि किलैव भूरिविरुतं [3] साश्रु पयः प्रश्नवे ॥ ४४ ॥

ततश्च रामभद्रेण नन्दिग्रामगमनाय भरतं, साकेतपरिरक्षणार्थं सैन्यमन्ति शत्रुघ्नश्चानुमेने । तदेव शत्रुघ्नस्यैव सैन्यसमुत्थापिनो रेणु ।

(नेपथ्ये कलकलः ।)
(सर्वे ससम्भ्रममाकर्णयन्ति)

**कनकचूडः**—

एषो मधुरगम्भीरो [4] रौद्रकल्पाकर पर ।
दूरतो श्रूयते शब्द सोऽयं सद्ग्रामसम्भवो ॥ ४५ ॥

**मुनिकुमारः**—महाभाग ! साम्प्रतमत्र मुनिजनोपद्रवाय प्रभूता नक्तञ्चरा सञ्चरन्ति । तत् केनापि सार्द्धं रामभद्रस्य युद्धं सम्भाव्यते ।

1 ततस्तत भा० । 2 पादौ नतिं द० । 3 साश्रु पय प्रश्नवे भा० । 4 रौद्रगम्भीर पर भा० ।

**कुमुदाङ्गदः**—भवतु, निपुणमाकर्णयाम । पुनस्तत्रैव—

हहो ! वृद्धतपोधनास्तदधुना यात स्वकानाश्रमान्,
अश्रान्तं कुरुत क्रतून्, वितनुत ज्योतिश्च हव्योत्करम् ।
यद् वैदेहनृपात्मजामपहरन्नेकेन रामेषुणा,
नष्टश्चासौ विराध इति वः शत्रुः सपत्नाहृतः ॥ ४६ ॥

**मुनिकुमारः**—(श्रुत्वा सानन्दम्) दिष्ट्या जगदनिष्टकारी तपोधनेषु नित्यं कृतापराधो विराधोऽयमधुना विनाशित एव रामभद्रेण । तदिदानीं सत्वरं गत्वा मुनिवृन्दमानन्दयामि । (इति उत्थातुमिच्छन् तौ प्रति) कौ पुनरमानवाकारौ भवन्तौ ?।

**कुमुदाङ्गदः**—आर्य ! कुमुदाङ्गदनामा गन्धर्वाधिपतिरहम् । सोऽयं कनकचूडनामा मदीयः पुत्रः ।

**मुनिकुमारः**—तद् भवद्भ्यामहमपि भगवतो भरद्वाजस्य प्रियशिष्यः सुयज्ञनामा न विस्मरणीयः । (इत्यभिधाय निष्क्रान्तः ।)

**कुमुदाङ्गदः**—वत्स कनकचूड ! तदिह प्रत्यासन्नस्य रामरूपधारिणो नारायणस्य बलीकृतेन लोकोत्तरं सुकृतमर्जयाम (इत्युत्थाय परिक्रामतः ।)

(ततः प्रविशतः सम्भ्रान्तचित्तौ धनुःपाणी रामलक्ष्मणौ भयेन वेपमाना सीता कृताञ्जलिर्दिव्यपुरुषश्च ।)

**रामः**—(सीतामाश्वासयन्)

प्रचकितचकोरनयने ! रौद्राकारान्निशाचरादस्मात् ।
किं दिक्षु दिशसि चक्षुर्मृगीव मृगराजसन्त्रस्ता [1] ॥ ४७ ॥

**सीता**—(साश्वासमात्मगतम्) एदस्स दुट्ठरक्खसस्स करप्फसदूसिदमत्ताणअं अज्जउत्तसरीरसंजोएण पुणो वि पविचीकरिस्सामि । (चिं रामस्य प्रत्यासन्नतरा भवति ।)

**पुरुषः**—(सविनयमञ्जलिं बद्ध्वा रामं प्रति)

जय जय नयनाभिराममूर्ते !, जय जय शौर्यवतां शिरोमतम !।
जय जय भुवनाभिवन्द्यकीर्ते !, जय जय वासवरत्नरत्न ! ॥ ४८ ॥

---

१ एतस्य दुष्टराक्षसस्य करस्पर्शदूषितमात्मानं आर्यपुत्रशरीरसंयोगेन पुनरपि पवित्रीकरिष्यामि ।

---

1 'यात भा० । 2 चकिता चको' भा० ।

**रामः**—(सन्धानात् सायकमुपसंहृत्य पुरुषं प्रति) कस्त्वं भो ! क्रव्यादशरीरमुत्सृज्य दिव्यशरीरमाश्रितवानसि ?।

**पुरुषः**—(सविनयम्) अयि नवाम्बुवाहश्याम राम ! तुम्बरनामा गन्धर्वोऽहं वैश्रवणशापेन राक्षसभावमनुभवन्नधुना भवत्कृतनिग्रहानुग्रहेण पुनरप्यात्मस्वरूपं प्रतिपन्नवानस्मि, तन्मर्षणीयमिदमस्मदीयमपराद्धम्।

**रामः**—(सबहुमानम्) भद्र ! निजशापप्रशमनार्थमेव त्वमस्माकमपकृतवानसि, न पुनः पापबुद्ध्या।

**तुम्बरः**—(सविनयम्) अहो वीरवरेण्य !

इयतेव विद्धि शुद्धं यस्मात् स्पृष्टाऽपि नादहद् देवी।
पापिनमपापिनं वा व्यनक्ति दिव्ये हि वह्निशिखा ॥ ४९ ॥

**सीता**—(रामं प्रत्यपवार्य) अज्जउत्त ! संपदि सोम्मदंसणं पि एदं पिक्खन्तीए मह हिययं अज्ज वि ण भीदिं परिहरदि[1]।

**कुमुदाङ्गदः**—(पुरो विलोक्य सानन्दम्) वत्स ! सोऽयमस्मदीयभ्राता तुम्बरश्चिरकालात् काकुत्स्थानुग्रहेण निरस्तराक्षसभावः पुरतो वर्तते, तदेनमालिङ्गामि। (इति परिक्रामति।)

(तुम्बरोऽपि तावुपलक्ष्य सानन्दमभ्येतीति।)

(सर्वे यथोचितमाचरन्ति।)

**लक्ष्मणः**—(दृष्ट्वा तुम्बरं प्रति) भद्र ! कावेतौ ?।

**तुम्बरः**—अयमस्मदीयो ज्येष्ठभ्राता।

**कुमुदाङ्गदः**—मत्सूनुरयं च कलकण्ठः। तदहमिदानीं रामभद्रदर्शनमासाद्य सङ्घटितकुटुम्बोऽस्मि संवृत्तः।

**सीता**—(सोत्कण्ठमात्मगतम्) एदाणं विय अम्हाण पि कया सअणसंजोओ हविस्सदि[2]?।

**तुम्बरः**—(कुमुदाङ्गदं प्रति) आर्य ! स एष त्रिभुवनैकरमणभूतो रामभद्रः।

---

१ आर्यपुत्र ! सम्प्रति सौम्यदर्शनमप्येनं प्रेक्षमाणाया मम हृदयमद्यापि न भीतिं परिहरति।
२ एतेषामिवास्माकमपि कदा स्वजनसंयोगो भविष्यति ?।

**कुमुदाङ्गदः**—(रामं प्रति सविनयम्)

सिञ्चसीव सुधया विलोचने, ज्योत्स्नया स्नपयसीव मानसम् ।
वीक्षितो वितरसीव वाञ्छितं, सद्धृतिं स्पृशसीव राघव ! ॥ ५० ॥

**तुम्बुरः**—देव दिवाकरकुलैकतिलक ! विश्रम्भादेतदनुयुज्यसे—वनवासव्रतकालशेषोऽयमिहैवाऽतिवाहयितव्यः स्थानान्तरे वा ?

**रामः**—गन्धर्वाधिपते ! चिरकालोपभुक्तादितः स्थानात् सम्प्रति दक्षिणां दिशं प्रति प्रस्थातुकामाः स्मः ।

**तुम्बुरः**—समुचितैव दिगियं युष्मादृशामाश्रयकरणाय । यतः—

रम्या दिशां चतसृणामपि दक्षिणाऽसौ,
यस्यामनन्यसदृशं द्वयमेतदस्ति ।
श्रीखण्डमण्डिततनुर्मलयो महाद्रि-
रुन्निद्रशुक्तिकरणाऽपि च ताम्रपर्णी ॥ ५१ ॥

**कुमुदाङ्गदः**—(सप्रश्रयम्) देव ! स्वयमेव कृतार्थीकृतानस्माननुजानातु भवान् निजनगरगमनाय । प्रवृत्ता सम्प्रति सायन्तनी सन्ध्या । तथाहि—

जनयति कनकाधिकेन धाम्ना, दिनगुरुरस्तगिरेः सुमेरुशोभाम् ।
दिशि दिशि नवमेघमेचकानि निचयमयन्तितमां तमीनभांसि ॥ ५२ ॥

**कनकचूडः**—इतोऽपि विलोक्यताम्—

त्रासोऽस्य मन्मथस्य, त्रिभुवनवनितामानसीनारहृद्ये
कैरवे, रुग्णाणां प्रियसुहृदमृतस्रोतसां शैलराज ।
पान्थस्त्रीणामपथ्यं, रथचरणचमूचक्रवालस्य काल,
शृङ्गारस्योपकार, स्फुरति रतिसमारौषधीनामधीश ॥ ५३ ॥

**रामः**— निरुपद्रवाः सर्वेऽपि सम्प्रति स्वर्गलोकसुखमनुभवन्तु भवन्तः । वयमपि सन्ध्याविधये प्रयतामहे । (इति निष्क्रान्ताः सर्वे ।)

इति श्रीकुमारसूनोः श्रीसोमेश्वरदेवस्य कृतावुल्लाघराघवे छायानाटके
चतुर्थोऽङ्कः समाप्तः ॥

वस्तुपाल ! भवतो भवकान्तारान्तर्दीधितिनितानसिनामि ।
कीर्त्तिभिर्जगति शार्वरशकाररमणीयकमनसमुदेति ॥ ५४ ॥

1 'प्रस्थातुमनु' भा० । 2 'प्रतिहत्य' द० । 3 'भवत' भा० । 4 इदमधिकं श्लोकः पाठः भ० ना० ॥

# पञ्चमोऽङ्कः ।

( ततः प्रविशति मारीचः । )

**मारीचः**——(सविमर्शम्) अहो ! तपःप्रपन्नानामपि नान्तरायाः [1]पृष्ठं परित्यजन्ति । ☞ [2]अद्य स्वयमागत्य दशानन कामो रामच्छलनाय मामभ्यर्थितवान् । ☜ कथितश्च ममाश्रमगतेन तेनैव गूढपुरुषमुखादाकर्णितो रामभद्रवृत्तान्तः——यथा चित्रकूटप्रस्थात् प्रस्थितस्य रामभद्रस्याऽत्रिमहर्षिणा सत्कारः कृतः, यथा च तत्पत्न्याऽनसूयया वैदेही शाश्वताङ्गराग[3]वस्त्रादिदानेन सम्भाविता, यथा च भगवता कुम्भसम्भवेन दिव्यायुधानि सम्पादितानि यथा च पञ्चवटीप्रविष्टेन रामभद्रेण शूर्पणखा छिन्नमुखावयवा कृता, यथा तेन जनस्थाननिवासिनो नक्तञ्चराश्च यमनगरातिथि[4]तामनुभाविता इति । तदिदानीं राक्षसेन्द्रदाक्षिण्याद्दशाननवचनेन मया किं कर्तव्यम् ? । यतः——

> निशिरःखरदूषणादयस्ते, दलिता केवलतो मखेन येन ।
> निर्जितेन पुराऽपि राजपुत्रः छलनीयः स कथं मया बलीयान् ? ॥ १ ॥

( इति चिन्तां नाटयित्वा पुनः सविमर्शम् ) अहो ! महतामप्यर्थित्वादपरं न दैन्यनिदानमस्ति । तथाहि——

> तद् बाहुवीर्यमनर्घ्यं निशाचरेन्द्रो,
> निस्सृत्य च द्रुहिणवंशसमुद्भवं स्वम् ।
> [5]गृध्नुः समा वसमना इव रामजाया,
> मायाकृते चटुशतं कृतवान् ममापि ॥ २ ॥

( पुरो विलोक्य ) कथमसौ राक्षसराजप्रणिधिर्घोराक्षो मम समीपमागच्छति ? ।

( ततः प्रविशति घोराक्षः । )

**घोराक्षः**——(पुरो विलोक्य) [1]एसे अज्जमालीचे, ता इ [6]गच्छम्हि । ( इति तथा कृत्वा प्रणम्य च ) अज्ज ! [7]समादिसदि लङ्केसले महालाए लावने, जधा–तुमए सयमगीकत-

१ एष आर्यमारीचः, तदहं गच्छामि । आर्य ! समादिशति राक्षसेश्वरो महाराजरावणः, यथा–त्वया स्वयमङ्गीकृतमर्थं कृत्वा वयं उपतिष्ठामहे ।

1 पृष्ठ भा० । 2 हस्तचिह्नान्तर्गतोऽयं पाठः भा० नास्ति । 3 'वस्त्रादि' भा० । 4 'विमानमनु' भा० । 5 गृध्नु स° भा० । 6 गच्छामि (ति तथा इ० । 7 समादिसदि ल° दे० ।

मत्थं कल्पितून अम्हानमुवकीरतं ।

**मारीचः**—( विलक्षं स्मित्वा ) घोराक्ष !

देवाधीनो रावणस्योपकारः, स्वस्मैवेदं तूपकर्तुं यतिष्ये ।
आमायन्ते ये तपोभिर्न लोका, रामान्मृत्युं प्राप्य गन्ताऽस्मि तेषु ॥ ३ ॥

**घोराक्षः**—अज्ज ! किं तुम्हे वि विसादसजुत्त व मन्तेध [1] ।

**मारीचः**—[2]वत्साऽसाध्ये कर्मणि दशकन्धरेण प्रयुक्तस्य मम कथं न विषादः ? । तथाहि—

देवेन्द्राद् दशकन्धरं गतवती, तस्माच्च माहिष्मती-
नाथं प्राप्तवती, ततश्च निजशश्रीराश्रिता भार्गवम् ।
निष्कम्पाथ ततो गतागतपरिश्रान्तेव तस्थौ स्थिरा
काकुत्स्थेऽत्र, जिजीविषुस्तदमुना सार्द्धं विगृह्णातु कः ? ॥ ४ ॥

**घोराक्षः**—अज्ज [3]यति तुम्हान पि [4]ईदिसे संदेहे, ता कज्जसिद्धी वि [5]तादिसी सभाविज्जते ।

**मारीचः**—देवे प्रतिकूले कुतः कार्यसिद्धिः ? ।

**घोराक्षः**—अज्ज दिव्वं पतिकूलं [6]कथं जानिय्यते ? ।

**मारीचः**—वत्स ! अविमृश्यकारिता प्रतापखण्डनमयतेन्द्रियत्वं चेति प्रतिकूलदैव-चिह्नानि । तथाहि—

जामिं सूर्पणखां यदेष विदधे व्यग्रां रघुग्रामणी-
रीर्ष्यद्वो परिधान् जघान समिति भ्रातॄन् खरादींश्च यत् ।
तत्रैता वहति त्रपा न च रूप पञ्चेषुणा वञ्चित-
श्चित्ते किन्तु तदङ्गना[7]पहरणं धत्तेऽधुना रावणः ॥ ५ ॥

किञ्च—

मूर्त्तिर्भूमिभुवः स्वभावसुभगा दत्त्वाऽङ्गरागं पुन-
स्तत्र श्रीरधिका न्यधीयततरामत्रे करत्रेण यत् ।

१ आर्य ! किं यूयमपि विषादसंयुक्तमिव मन्त्रयथ ? ।
२ आर्य ! यदि युष्माकमपि ईदृशः सन्देहः, तत् कार्यसिद्धिरपि तादृशी सम्भाव्यते ।
३ आर्य ! दैवं प्रतिकूलं कथं ज्ञायते ? ।

1 मन्तेध दे० । 2 वत्स ! दुरसाधकर्मणि मा० । 3 जदि दे० । 4 ईदिसे दे० । 5 तादिसी सभाविय्यदि दे० । 6 कथं जानिय्यते मा० । 7 नास्वल्न धत्ते मा० ।

काकुत्स्थे स्वयमुग्रधामनि मुनिर्यश्चाऽस्त्रविद्या ददौ,
तत् पौलस्त्यकुलक्षयाय नियतं सोऽयं त्रिलोपक्रमः ॥ ६ ॥

[1]एष इदानीं कान्तिष्ठते दशकण्ठदेव[2] ।

**घोराक्षः**—अज्ज[1] एतस्स रामनिवेसस्स सन्निहत्थिते कततावसवेसे अलक्खिते ज्जेव तुम्हेहिं मायापवञ्चेन करिस्समाण रामलक्खणापकरिसन पतिक्खमाने चिट्ठदि । [3]ता मये निवेदितावसले आगन्तुन [4]सीतापहरन करिस्सदि ।

**मारीचः**—(सोद्वेगचिन्तम्) विरुद्धो हि विधिः । न केवल विभूतिं, बुद्धि मप्यपकर्षति । तथाहि—

महाग्निहोत्री द्रुहिण[5]स्य पौत्रो, जिघृक्षतेऽन्यस्य कलत्रमेष ।
[6]तत्रापि वीरस्य रघूद्वहस्य, छलेन तत्रापि न विक्रमेण ॥ ७ ॥

भवतु, यद् भाव्य तदवश्यमेव भविष्यति । तदेहि प्रस्तुतकार्याय प्रयतावहे । (इति निष्क्रान्तौ ।)

॥ विष्कम्भकः ॥

(ततः प्रविशति यथानिर्दिष्टो रावणः ।)

**रावणः**—(सवितर्क[7]नुरागम्) *अपि नाम मत्यं स्याद् वैदेहीवि[8]षयेऽनभापितमन्यथा ।*

तन्वीति चन्द्रवदनेति मृगेक्षणेति,
*कुरङ्ग[9]नीति मधुराऽधरपल्लवेति ।*
सीता [10]श्रुताऽथ कथिताऽथ यथा तथेयं,
स्यात्ताम[11] तद् विधिरचिन्त्यविधानशक्तिः ॥ ८ ॥

(पुनः सस्पृहोल्लासमात्मानं प्रति)

रम्भाया सुभगत्वमङ्गनया द्वेधाऽप्यथ कुर्वती
द्वेधाऽ[12]प्यकनपराजयोर्निनमुखीमालिखितु आत्मनीम् ।

---

१ आर्य ! एतस्य रामनिवासस्य सन्निधिस्थितः कृततापसरूपः अलक्षित एव युष्माभि मायाप्रपञ्चेन करिष्यमाण रामलक्ष्मणापकर्षण प्रतीक्षमाण तिष्ठति । तद् मया निवेदितावसरे आगत्य सीतापहरण करिष्यति ।

1 तदिदानीं भा० । 2 दशकण्ठ° द० । 3 ततो मम द० । 4 सादाप° द० । 5 °णप्तरौ भा० । 6 तथापि भा० । 7 °नुगतम् द० । 8 विषयेऽवरभाषितमन्यथा वा भा० । 9 °रताति द० । 10 स्तुता च क° भ० । 11 °म यद् विधिराचरति° द० । 12 प्यक्षपरा° द० ।

तत्र क्षत्रजटौ च सङ्घटयितुं निस्त्रिंशदण्डाशनिं,
सज्जा सम्प्रति बाहवो भवत हे ! लब्धक्षणो रावण ॥ ११ ॥

(इति मुहूर्त्तमिव स्थित्वा काननमवलोक्य) अये ! कथमसौ मधुमासो मम सेवासमयमवगम्य [1]स्वचिह्नानि प्रकाशयति ? । तदेतानि मदनानलोद्दीपकानि न मे सम्प्रति सीतासक्तमानसस्य [2]सम्मदमुत्पादयन्ति । (इति निवारयति साक्षेपम्)

किं चाचाल ! करोषि रे कलरव पुस्कोकिल ! त्वं मृषा ?,
कस्मान्मारुत ! वासि वासितवपुस्त्वं मल्लिकाचम्पकैः ।
पुष्पौघ सहकार ! वारय नव घ्राणेन, सेवाक्षणो
युष्माकं भविता सदा जनकजायुक्तो यदा रावणः ॥ १२ ॥

कथमद्यापि विलम्बते घोराक्षः ? ।

(प्रविश्य सम्भ्रान्तः)

**घोराक्षः**—भट्टा ! अवसले सपदि अज्जकज्जस्स ।

**रावणः**—(सहर्षम्) घोराक्ष ! कच्चिदपकृष्ट एव मारीचेन सीतासमीपतः स रामनामा तापसभट्टः ।

**घोराक्षः**—न केवल लामे, लक्खने पि ।

**रावणः**—साधु महाप्राज्ञ मारीच ! साधु । कथमतिवाहितावेतौ ? ।

**घोराक्षः**—भट्टा ! अज्जमालीचे कञ्चनहलिनलुवं कलितून सीताए पुलते सचलिते । [3]तालिसस्स तस्स दसनेन सजातकोदुहल्लाए सीदाए भनिते प्रतिम्सनि तस्स चिय चित्तचम्मसग्गहनत्थं धनुस सतून गहितून पस्थिते लाहवे ।

**रावणः**—ततस्ततः ? ।

---

१ भर्त्तः ! अवसरः सम्प्रति आर्यकार्यस्य ।

२ न केवलं रामः, लक्ष्मणोऽपि ।

३ भर्त्तः ! आर्यमारीचः काञ्चनहरिणरूपं कृत्वा सीतायाः पुरतः सञ्चलितः । तादृशस्य तस्य दर्शनेन सञ्जातकुतूहलया सीतया भणिते प्रदेश्य तस्यैव चित्रचर्मसङ्ग्रहणाय धनुः सतूणं गृहीत्वा प्रस्थितः राघवः ।

1 इस्तचिह्नान्तर्गतोऽयं पाठः दे० नास्ति । 2 °यन्ताति निवारयाम । (साक्षेपम्) मा० । 3 कञ्चण पु° मा० । 4 तालिसस्स भा० ।

**घोराक्षः**—[1]ता दूरपथ गतस्स तस्स घातनत्थ राहवेन सले मुक्के। ता सलप्प हालानतल विवज्जमानेन सम्पत्तलक्खसल्लवेन मालीचेन तालस्सलमेव घोसिद–हा [1]भातुक लक्खन! कसट कसट, परित्तायस्स परित्तायस्स।

**रावणः**—ततस्तत ?।

**घोराक्षः**—[2]त च राहवसद्द सभावयतीए जानईए साद्ध[3]सनेरमानहियं[4]याये अनिच्छन्ते पि लक्खने तेहिं तेहिं कक्कसवयनेहिं दुगछित्तून लामसयास पसिदे। ता दाणिं एक्कल्ल चिय सा लामभारिया चिट्ठदि। अवसले महा[5]लायस्स।

**रावणः**—(श्रुत्वा सशो[5]कविस्मयहर्षं घोराक्ष प्रति) कथ व्यापादित एव तेन तापसापसदेन मारीच ?। हा मायाचतुर मारीच! सन्तु ते स्वामिभक्ताना लोका। (इत्यभिधाय घोराक्ष प्रति) घोराक्ष! दर्शय त्रिभुवनैकाभरणभूता सीताम्।

**घोराक्षः**—[3]इतो [6]इतो भट्टा! इति।

(उभौ रामाश्रमाभिमुखौ परिक्रामत ।)

**घोराक्षः**—[4]भट्टा[7]! एशा जानकि (चि अङ्गुल्या दर्शयति।)

**रावणः**—(दृष्ट्वा सस्पृहम्)

सेयं, नमो भगवतेऽद्भुत[8]सृष्टिकर्त्रे धात्रे,

(स्वात्मान प्रति)

स्थिरीभव मन! पुरत प्रियाऽसौ।

(कामबाधा निरूपयन्नाकारो)

---

१ तत दूरपथ गतस्य तस्य घातनार्थं राघवेण शर मुक्त। तत शरप्रहारानन्तर विपद्यमानेन सम्प्राप्तराक्षसरूपेण मारीचेन तारस्वर एव घोषितम्—हा भ्रातर लक्ष्मण! कष्ट कष्टम्, परित्रायस्व परित्रायस्व।

२ त च राघवशब्द सम्भावयन्त्या जानक्या माध्वसवेपमानहृदयया अनिच्छन्नपि लक्ष्मण तैस्तै कर्कशवचनै जुगुप्सित्वा रामसकाश प्रेषित। तद् इदानीं एकाकिन्येव सा राममार्या तिष्ठति। अवसर महाराजस्य।

३ इत इतो भर्त !।

४ भर्त ! एषा जानकी।

---

1 भाउ भाउ ल° द०। 2 °सविवज्जमान मा०। 3 °हृदयकाये अनिच्छन्तहिं पि लक्खनहिं कक्कसवयनेहिं दुर्भा छत्तून दे०। 4 °ला.स्स मा०। 5 °कविस्मयम्) व्यापादि त मा०। 6 इतो भाट्टे! (इति द०। 7 हा! पश्य न° मा०। 8 °सृष्टकर्त्रे मा०।

कन्दर्प ! संहर शरान् शरणं भवान् मे,

(प्राप्त्युपायं चिन्तयन्)

हे भागधेय ! फलितु समयस्तवायम् ॥ १३ ॥

तद् घोराक्ष ! गच्छतु भवान् । [1]वयमिह समीहितं साधयामः ।

**घोराक्षः**—(प्रणम्यापक्रामन्नात्मगतम्) कंध एसे लक्खसेसले सीतं [2]अवहलिस्सति [1] त्ति चिट्ठदि मे कोदुहल्लता । ता अलक्खिदे ज्जेव हगे पिक्खिस्सं । (इति वृक्षान्तरितः पश्यति ।)

(ततः प्रविशति रामस्याऽऽगमनमार्गमवलोकमाना चकितान्तःकरणा सीता ।)

**सीता**—(सविनयमञ्जलिं बद्ध्वा) भअवदीओ वणदेवदाओ ! तुम्हाणं पसाएणं लक्खणसजुत्तो कुसलेण समागच्छदु अज्जउत्तो [2] ।

**रावणः**—(उपसृत्य) अयमहम्, भो ! विद्यतेऽत्र कश्चिदतिथिसत्काराय [3] ।

**सीता**—(श्रुत्वाऽवलोक्य च ससम्भ्रमम्) कंध अदिधी संपत्तो [3] । (इत्युपसृत्य आसनमर्पयति ।)

**रावणः**—(सविस्मयानुरागमात्मगतम्)

अकुङ्कुमविलेपनाऽप्यनुकरोति स्वर्णं [3]तनू-

स्तनाञ्जनमपि प्रियं नयनयोर्द्वयं पक्ष्मलम् ।

अयावकरसोऽप्यसावरुणरोचिरेवाधरो,

धरादुहितुरङ्गकान्यकृतका श्रयन्ति श्रियम् ॥ १४ ॥

**सीता**—(सविनयम्) भअवं ! कुदो आगच्छीयदि [4] ।

**रावणः**—सुभगे ! दक्षिणापथात् ।

---

१ कथं एष राक्षसेश्वरः सीतां अपहरिष्यति ? इति तिष्ठति मे कुतूहलता । तद् अलक्षित एव अहं प्रेक्षिष्ये ।

२ भगवत्यो वनदेवताः ! युष्माकं प्रसादेन लक्ष्मणसंयुक्तः कुशलेन समागच्छतु आर्यपुत्रः ।

३ कथं अतिथिः सम्प्राप्तः ? ।

४ भगवन् ! कुत आगम्यते ? ।

---

1 वयमपि ल° दे० । 2 अमिस्सति ?, चि° दे० । 3 तनूर्निरञ्जन° भा० ।

**सीता**—तां वीसमीयदु मुहुत्तअं। (इति पद्मिनीपत्रपुटके कृत्वा पाद्यमुपनयति।)

**घोराक्षः**—(सीतां निर्वर्ण्य सशिरःप्रकम्पमात्मगतं संस्कृतमाश्रित्य) अहो! त्रिभुवनवनितासौन्दर्यमदापहारी विदेहदुहितुरेतस्याः शरीरसन्निवेशः। तथाहि—

वचसः स्थिरता, दृशोश्चलत्वं, कुचयोरुद्धतताऽस्मयोर्नतिश्च।
उदरस्य दरिद्रता, समृद्धिर्जघनस्य, क्वचनापि नेदृगस्ति ॥ १५ ॥

तन्नैतदसाम्प्रतम् यदसौ प्राणानपि पणीकृत्य कोणपाधिपतिः पतिभावमस्यामभिलषति।

**रावणः**—(पत्रपुटपानीयेन पादौ प्रक्षाल्य सानुरागमात्मगतम्।)

चन्द्रोऽह्नि, पद्मं निशि, कोकिलोक्तिः
पौषादिमासेषु न राजते यत्।
सीतातनौ तन्नियतं तदीय-
सौन्दर्यमद्धा निदधे विधाता ॥ १६ ॥

(सीताऽपि तं गतश्रमं विदित्वा फलाहरणार्थमुटजमध्ये प्रविशति।)

**रावणः**—(स्वगतमाकाशे) हहो मन्मथ! मैथिलीमुद्दिश्य प्रहरन्नपि[1] सम्मतस्त्व-मस्माकम्। तदुपदिशाम[2] किञ्चित्—

परिहर हरिणाक्षं यद् कृपाक्षप्रपाते-
ऽप्ययमयशसि मग्नं त्वा करोति स्म भुवन।
मदन! वदनपद्मेनाऽऽयुधेनाऽमुनाऽपि,
त्रिभुवनमपि वश्यं ते भविष्यत्यवश्यम् ॥ १७ ॥

**सीता**—(उटजमध्यात् फलान्यानीय तापसं प्रति) भअवं! इमाइं फलाइं, गिण्हदु भवं।

**रावणः**—(सीतां प्रति सानुरागम्) भद्रे[3] न खलु वयं फलकामिनोऽपि। किन्तु त्वत्करपल्लवादनुगृहीताः स्म।

(सीताऽप्यविदिताभिप्राया सस्मितं तापसमवलोकयन्ती तिष्ठति।)

---

१ तद् विश्राम्यतु मुहूर्तम्।
२ भगवन्! इमानि फलानि, गृह्णातु भवान्।

1 'रन्नपि' म०। 2 'त्वमस्माकम्' मा०। 3 क। किञ्चित् दे०।

**रावणः**—( तादृशीं तामवलोक्य स्वगतम् ) अद्याप्यसौ मुग्धा, न विदग्धवचनाना भावार्थमवगच्छति । तदुन्मुद्रयामि किञ्चिदभिप्रायम् । समागमनसमयश्च तस्य दुरात्मनो नृपतिपोतकस्य । (प्रकाशम्) भद्रे !

देव प्रयत्नातिशयेन शङ्के, व्यधत्त पङ्केरुहकेतनस्त्वाम् ।
स्थाने [1]यदन्ये तु निवेशिताऽसि, तेनाऽबुधेनाऽकरेऽब्जिनीव ॥ १८ ॥

**सीता**—( श्रुत्वा सविस्मयेर्ष्यमात्मगतम् ) कंध एस तवस्सिजणाणुरूवं न जपदि [1] ।
( इति किञ्चित् पश्चादपक्रामति । )

**रावणः**—( सानुरागम ) देवि ! दशाननोऽहं कन्दर्पकदर्थितस्तव शरणमागतोऽस्मि । इदमप्यवधार्यताम्—

अनङ्गसञ्जीवनमेतदङ्गमालिङ्गितु नार्हति तापसस्ते ।
अहं पुन पीनपयोधरे ! त्वत्सम्भोगभोग्योचितमूर्तिरस्मि ॥ १९ ॥

अपर च—

मयि वीरवरे सति त्वमन्य, पुरुष नार्हसि [2]बर्हिकेशि ! गन्तुम् ।
त्रपुणि प्रणय करोति कान्ते !, तपनीय व्यपनीय सन्मणि किम् [3] ॥२०॥

( इत्यात्मरूप प्रकाशयति । )

**सीता**—( दृष्ट्वा सभयोद्वेगम् ) हद्धी ! को एस अयाल्दारुणो मह उवत्थिदो [2] ।
( इति फलानि भूमौ प्रक्षिप्य भयेन वेपमाना पश्चादपक्रामन्ती दिशोऽवलोकयति । )

**रावणः**—प्रिये ! किमेवमाकुलीभूताऽसि ? । ननु विचारय चेतसा मम त्रैलोक्य विजयिन प्रीतिपात्रत्वफलम् ।

मम विक्रमभीतभर्तृकाणा, नरदेवोरगदेवसुन्दरीणाम् ।
पतिजीवितभैक्षमिच्छतीना, भव भद्रे ! भजनीयपादपद्मा ॥ २१ ॥

**सीता**—( पराङ्मुखीभूय सभयरोषम् ) [3]रे निशाचराधम ! किं हालाहल कवलिदुकामो सि [?] । किं वा कयतवयणप्पवेसमहिल्सि [?] । ता गच्छ तुवरिय, जाव न लक्खणभाउ समागच्छदि त्ति ।

---

१ कथ एष तपस्विजनानुरूप न जल्पति ? ।

२ हा धिक् !, क एष अकालदारुण मम उपस्थित ? ।

३ रे निशाचराधम ! किं हालाहल कवलयितुकामोऽसि ? किं वा कृतान्तवदनप्रवेशम भिलषसि ? । तद् गच्छ त्वरितम्, यावद् न लक्ष्मणभ्राता समागच्छति इति ।

---

1 जघये मा० । 2 बर्हकचि मा० । 3 'शो विलो' मा० ।

सकरुणम्) अहह !

अनेन नीयमानाऽसौ जानकी क्रूरकर्मणा ।
श्येनेन वर्तिकेवाऽऽत्ता करुणं क्रन्दति स्वरैः ॥ २३ ॥

(इति पुरोभूय रावणं प्रति)

निशाचराधीश्वर ! मुञ्च सीतां, यतः स्वयं शम्भुकुलोद्भवोऽसि ।
न मन्मथस्यैव तदेतदस्य लब्धावकाशस्य निषेध्य विद्धि ॥ २४ ॥

अपि च—

वीरश्रीशरणैर्निजप्रहरणैः साध्यं रणप्राङ्गणे,
निर्विघ्नं शमनोऽमनोऽपि तदसौ [1]कुद्धं विधत्ते त्वयि ।
तत्तत्त्वं[2]रत्नाकर ! स्वविमुनासन्तानधर्मच्छिदे,
दुष्कर्माभिधमेतदायुध[3]महो ! दत्से किमस्मै भवान् ? ॥ २५ ॥

**रावणः**—(वीक्ष्योपलक्ष्य च) अये ! वार्द्धकविधुरो जटायुरयमेवं प्रलपति ? । (तं प्रति सावज्ञम्) भो पण्डितम्मन्य जरद्गृध्र ! ममापि त्रैलोक्यविजयिनो रावणस्य पुरतो विभीषिका-गर्भमेवमभिधत्से ? । पश्य—

पराजितपुरन्दर युधि विधूतधूमध्वज,
नि[4]तान्तनिहतान्तकं शमितपाशपाणिप्रभम् ।
प्रभञ्जनविभञ्जनं धनपतिप्रतिष्ठाहरं,
पराक्र ! दशकन्धरं जगति वेत्ति वीरं न कः ? ॥ २६ ॥

तत् किमेतया गतवयसो वयमस्तव मदीयशुभाशुभचिन्तया ? । गच्छ निजकार्याय ।

**जटायुः**—हहो राक्षस ! त्रैलोक्याहित ! हितवादिनमपि मामेवमाक्षिपसि ? । तन्निजका[5]र्यार्थमेवाहमागतोऽस्मि ।

**रावणः**—(सावेगम्) किं ते निजकार्यम् ? ।

**जटायुः**—ननु भवद्भुजपञ्जरात् सीताविमोचनम् ।

**सीता**—(श्रुत्वा साश्वासमिव) [१] को एस महाभाओ दुव्वअणाणलदड्ढं मं वअण

१ क एष महाभागो दुर्वचनानलदग्धां मां वचनपीयूषरसेन सिञ्चति ? । हा तात ! परित्रायस्व परित्रायस्व मामस्माद्दुर्जनात् । शरणं गताऽस्मि आर्यस्य ।

1 क्रुद्धे न पश्य भा० । 2 °मर [इ?] °माभिलषता° भा० । 3 महो ! पश्य किं° इ० । 4 क्षणान्त° इ० । 5 °र्थमेव° भा० ।

पीयूषरसेण सिंचदि १। (पुनर्नेत्रे उन्मील्य सकरुणं जटायुषं प्रति) हा ताद ! परित्ताहि परित्ताहि मं मिच्छमुहादो। सरणं गद म्हि अज्जम्म। (इति जटायुरभिमुखं बाहू प्रसारयति।)

**जटायुः**—वत्से ! समाश्वस्ता भव। को नाम मयि दशरथमित्रे स्थिते सति तवापहाराय प्रभविष्णुः ?।

**घोराक्षः**—(जटायुषं दृष्ट्वा सविस्मयम्) अहो ! राहवस्स सअलभूदवग्गाणुलग्गदा, जं पक्खिनो पि तस्स पक्खवातं कुनंति।

**रावणः**—(सरोषाट्टहासम्) अहो ! गृध्रकीटस्यावष्टम्भः, यन्मयाऽपि गृहीतां सीतामसौ मोचयितुकाम। (पुनस्तं प्रति) रे पक्षुमूनो पतङ्गापसद ! सीतामोचनं व्यपदिश्य तव पुनर्निजकार्यमपरमेव साम्प्रतमहं मन्ये। तथाहि—

जरापराभूततनोस्तवाद्य, गन्तुं न तीर्थान्तरमस्ति शक्तिः।
तदत्र पत्रिन् ! मम खड्गधारातीर्थे त्वमाकाङ्क्षसि देहमोक्षम् ॥ २७ ॥

(इति चन्द्रहासमुल्लालयति।)

**जटायुः**—(सक्रोधम्) रे यातुधानाधम !

धारातीर्थे मरणं शरणयाता कुलाङ्गनामवतः।
श्लाघ्यं ममाद्य, न पुनर्भवतस्ता मायया हरतः ॥ २८ ॥

(इत्युभौ संरम्भं नाटयतः।)

**सीता**—हा ताद विहङ्गपुङ्गव ! रक्ख रक्ख मं रक्खसादो। (इति रुदन्ती जटायुषो मुखमवलोकयति।)

**जटायुः**—(सीतां प्रति सावष्टम्भम्)

सीते ! भीते परिचितिरितश्चेतसो यातु २पातं,
यस्त्वां प्राप्तः प्रतिभयमिदानीम्परोऽयं जटायुः।

(पुनः रावणं प्रति साक्षेपम्)

१ अहो ! राघवस्य सकलभूतवर्गानुलग्नता, यत् पक्षिणोऽपि तस्य पक्षपातं कुर्वन्ति।
२ हा तात विहङ्गपुङ्गव ! रक्ष रक्ष मां राक्षसात्।

1 °पहरणाय मा०। 2 यातु द०।

रे रे साध्वीं दशरथवधू मुञ्च मोहान्ध ! नो चेत्
कर्ता क्षोणीमरुणतनय शोणिता शोणितैस्ते ॥ २९ ॥

( रावणाभिमुखं धावति । )

**रावणः**—( सक्रोध कृपाणमाकर्षन् ) साधु सुभटम्मन्य जटायो ! साधु। तदेहि करहकेलिसहा महीमवतराव । ( इत्युभौ निष्क्रान्तौ । )

**घोराक्षः**—[1]ता पउत्त जुज्झ पक्खिराअरक्खसराअओ, ता इहट्ठिदे ज्जेव हगे पिक्खिस्स । ( इति तथाकरोति )

( नेपथ्ये )

पुलस्त्यकुलपासन !

निर्जितोऽसि निर्जरैव सैरेभिरजितेन्द्रिय ! ।
नन्वैमें त्वमिदानीं तु रे जघन्य ! निहन्यसे ॥ ३० ॥

अपि च—

रे रक्ष. ! प्रतिपक्षता मयि गते गन्ताऽसि तूर्णं पुरी,
धूमोर्णारमणस्य रावण ! तत पाणौ कृपाणं कुरु।
मस्तिक्यामिषगर्धिगृध्रपटलत्रोटीकरोटीषु ते,
त्राट्कारं कुरुता भवन्तु च तथाऽसृक्पानपीना शिवा ॥ ३१ ॥

**घोराक्षः**—( दृष्ट्वा ) कँध गुद्धराअतिक्खणखकुलिसविदालितसव्वङ्गणीसरन्तलुहिरप्पवाहनिवडतधातुरसपिच्छिले नीलसेले ज्जेव सजादे रक्खसेसले [2]। ता पुणो वि पिक्खिस्स ।

( पुनस्तत्रैव )

**रावणः**—रे रे मुमूर्षो खगमुखर ! अति हि प्रगल्भसे । पश्य—

अरुणसुत ! मदस्त्रपातजातैर्निजरुधिरैररुणो भवत्निदानीम् ।
पितुरनुगुण एव नन्दन स्यादिति वचनं विदुषां कुरुष्व सत्यम् ॥ ३२ ॥

( पुनस्तत्रैव )

---

१ तत् प्रवृत्त युद्ध पक्षिराजरक्षोराजयो , तद् इहस्थित एव अहं प्रेक्षिष्ये ।

२ कथ गृध्रराजतीक्ष्णनखकुलिशविदारितसर्वाङ्गनिस्सरद्रुधिरप्रवाहनिपतद्धातुरसपिच्छिल नीलशैल एव सञ्जात राक्षसेश्वर [2]। तत् पुनरपि प्रेक्षिष्ये ।

---

I पउत्त जुज्झ ताव ज्झाण पक्खिलक्कममनाहान, ता इह° आ० ।

हे चन्द्रहास ! सहसा गमय त्वमेत-

मत्युद्धतं पतगमन्तिकमन्तकस्य ।

जेताऽसि वासवमपास्तमहीध्रपक्षं,

मा गृध्रपक्षतियुगक्षितिषु त्रपस्व ॥ ३३ ॥

तदेष न भवसि ।

**घोराक्षः**—कधं महाराअलावनेन छिन्नपक्खजुगले महीतलं निपतिते ज्जेव पतंगलाये[1] ।

( पुनस्तत्रैव )

**सीता**—हा अज्जउत्त[2] हा लक्खण वत्स ! एस तुम्हाण असरणसज्जणो जटाऊ मह मंदभाइणीए परित्ताण कुणतो वावादीयदि । ता रक्खध एणं ।

**घोराक्षः**—( विलोक्य ) ऐसे[3] लक्खसेसले जडायु जीवसेस कलितून पतिथिते ज्जेव ।

( ततः प्रविशति गृहीतधन्वा रामः ।)

**रामः**—( सविस्मयम् ) अहो ! विप्रलब्धोऽस्मि विश्वामित्रसत्रपरित्राणाय वायव्यास्त्रनिर्धूतेन मायामृगमयीं मरुमरीचिकां दर्शयता मारीचेन । ( पुनः सविमर्शम् )

चञ्चत्काञ्चनकान्तिमिश्रितमणिश्रेणीभिरेणीभवन्,

मारीचो रचयांचकार यदिदं मद्वञ्चनायैव तत् ।

भ्रातर्लक्ष्मण ! रक्ष मामिति पुनर्यद् व्याहृतं रक्षसा,

तेनोच्चैर्मम बाणरुग्णवपुषा किं नाम तत्कारणम् ? ॥ ३४ ॥

भवतु । तदपि परिज्ञास्यते । ( इति परिक्रामति । )

**घोराक्षः**—( दृष्ट्वा ससंभ्रमम् ) ऐसे[4] संपत्ते ज्जेव लाहवे । ता अनिलिक्खिते ज्जेव पलाइस्सं । ( इति पश्चादवलोकयन् द्रुततरं निष्क्रान्तः ।)

**रामः**—( "चञ्चत्काञ्चन०" इत्यादि पुनः पठित्वा पुरो विलोक्य ससंभ्रमम् ) कथमसौ वत्सलक्ष्मणः समागच्छति ? ।

---

१ कथं महाराजलावणेन छिन्नपक्षयुगले महीतले निपतित एव पतङ्गराजः ? ।

२ हा आर्यपुत्र ! हा लक्ष्मण वत्स ! एष युष्माकं अशरणसज्जनः जटायुः मम मन्दभागिन्याः परित्राणं कुर्वन् व्यापाद्यते । तद् रक्षत एनम् ।

३ एष राक्षसेश्वर जटायुं जीवशेषं कृत्वा प्रस्थित एव ।

४ एष संप्राप्त एव राघवः । तद् अनिरीक्षित एव पलायिष्ये ।

---

१ ०क्ष्मणः भा० ।

( ततः प्रविशति सम्भ्रान्तचित्तो लक्ष्मणः । )

**लक्ष्मणः**—( रामं दृष्ट्वा ) आर्य ! लक्ष्मणः[1] प्रणमति । ( इति तथा करोति । )

**रामः**—वत्स ! किमेकाकिनीं जानकीं समुत्सृज्य समागतोऽसि ? ।

**लक्ष्मणः**—आर्य ! किं करोमि ? । केनचिदुच्यमानं तत् तादृशं वचनमाकर्ण्य चकितान्तःकरणा देवी यन्मां प्रत्युवाच तदहं न विज्ञपयितुं शक्तः, न चाऽऽर्यः श्रोतुमर्हति ।

**रामः**—( ससम्भ्रमम् ) वत्स ! तथापि किं तत् ? ।

**लक्ष्मणः**—तदवधार्यतामार्येण—

भ्रातर्जातभयस्य लक्ष्मण ! मम त्राणं कुरु क्षिप्रमि
त्यूचे कश्चिदुवाच वाचमथ तां श्रुत्वा त्वदुक्तिभ्रमात् ।
देवी प्रेषयति त्वदन्तिकमहं नोत्सृज्य गच्छामि तां,
निश्चिक्ये तदसावसाधुमिव मामार्या च मर्तुं स्थिता ॥ ३५ ॥

**रामः**—( सचमत्कारं नखच्छोटिकां दत्त्वा ) नियतमेतदर्थमेव मृत्युमुखमुपसर्पता सता मारीचेन तद्वचनमेवमुदीरितमिति । ( पुनर्लक्ष्मणं प्रति ) वत्स ! कथमेकयातुधानवधेऽपि मामसमर्थं मन्यसे ? यद् वैदेहीवचनेन मामनु चलितोऽसि ।

**लक्ष्मणः**—आर्य ! 'एकोदराणामपि द्वेषविधायकानि प्रायेण वनितावाक्यानि भवन्ति' इति समागतोऽस्मि । किञ्च—

भृत्यापराधं प्रभुरात्मदृष्टं, स्पष्टं विमृश्य क्षमतेऽथ नो वा ।
यस्तु श्रुतः स्त्रीमुखतः परोक्षे, तितिक्ष्यतेऽसौ न तितिक्षुणाऽपि ॥ ३६ ॥

**रामः**—वत्स ! कोऽयं दुर्विकल्पो यदात्मानमपि त्वमितरजनसामान्यं मन्यसे ? । अपरं च—

सम्भावयतु भयं मयि वैदेही स्नेहतोऽथ कातर्यात् ।
त्वयि पुनरधर्मशङ्का महदनिमित्तं तदेतस्याः ॥ ३७ ॥

( इत्युभौ त्वरिततरं स्वाश्रमाभिमुखं परिक्रामतः । )

**रामः**—( दुर्निमित्तं सूचयित्वा सोद्वेगचिन्तम् ) वत्स ! सम्प्रति स्फुरता मम वामलोचनेन तेन च त्वद्रूपधारिणा मारीचवचनेन निश्चितमेवमवगच्छामि, यत् केनापि मायाविना नक्तञ्चरेणापहृता जानकी ।

---

1 'लोऽहं प्रणमामि' इति मा० । 2 'तावचनानि मा० ।

**लक्ष्मणः**—(सावष्टम्भम्) आर्य ! केयमाकुलता ? । नन्वव[1]धीयताम्—

तैर्लक्षणे सुचरितेन च तेन दे[2]व्या,
सम्भाव्यते न खलु भी पिशिताशनेभ्य ।
[3]स्याद् वा ततस्त्वमसि वीर ! विमुञ्च खेदं,

**रामः**—(सविल्ष्य स्मितया) वत्स ! सरलाशयोऽसि । पश्य—

सर्वं भवत्यपरथैव विधो विरुद्धे ॥ ३८ ॥

(पुरो विलोक्य च [4]सविषादम्) वत्स लक्ष्मण ! सेय पर्णशाला दृश्यते, न पुनर्जानकी । पश्य—

अस्मत्समागमनमार्गनिविष्टदृष्टि,
कृत्वा करे च करक करकोज्ज्वलायम् ।
यन्मैथिली न खलु सम्मुखमेति मे तद्,
नून बभूव विफल सकल प्रयत्न ॥ ३९ ॥

**लक्ष्मणः**—(समन्तादवलोक्य सविषादमात्मगतम्) कथ नास्त्येव देवी वैदेही ? । (प्रकाश राम प्रति) आर्य ! परिहासशीला देवी, तत् कदाचिद् दर्शनपथ परिहृत्य स्थिता भविष्यतीति ।

**रामः**—वत्स ! सत्यम्, परिहासशीला देवी जानकी, न पुनर्नियति, तदावदव लोकयता क्वाऽपि । (इत्युभौ सर्वतो विलोकयत ।)

**रामः**—(सविषादम्) हा प्रिये जनकनन्दिनि ! क्वासि ?, प्रयच्छ मे प्रतिवचनम् । (इति मूर्च्छित पतति ।)

**लक्ष्मणः**—आर्य ! समाश्वसिहि समाश्वसिहि ।

**रामः**—(समाश्वस्य) वत्स ! किमलीकमाश्वासयसि ? । दर्शय क्वाऽपि जानकीम् ।

**लक्ष्मणः**—(समन्तादवलोकयन्नुच्चैः स्वरम्)

रामगेहिनि ! समेहि सत्वरं, देहि मे प्रतिवच क्व तिष्ठसि ? ।
भर्तुरर्तिनरधौ निमज्जतो, [5]निर्विलम्बमवलम्बन भव ॥ ४० ॥

कथ प्रतिवचनमपि न ददाति देवी ? । (पुन सविषादमात्मगतम्) हा लक्ष्मणहतक ! त्वय निर्गमितमार्यस्य स्त्रीरत्नन्यासमनिर्यातयन् कथमिव जीवितुमुत्सहसे ? । (प्रकाशमुच्चै

1 °यथार्थनाम् भा० । 2 सम्यो भा० । 3 स्याच्चेत् तत° भा० । 4 सखेदम् भा० । 5 निर्विकल्पमव° द० ।

स्वरम् "रामगेहिनि !" इत्यादि पुन पठन् सर्वतो विलोकयति ।)

**रामः**—(सबाष्पम्) हा देवि ! जनकराजात्मजे ! नाय परिहासकाल, तद् देहि दर्शनम्, यावदिद रामहृदय न द्वेधा भवति । अपर च—

दृष्ट वा यदि वा श्रुत मम किमप्यद्य प्रिये ! विप्रिय
येनादर्शननिग्रहस्य महत पात्र कृतोऽस्मि त्वया ।
यद्वा तिष्ठतु साम्प्रत, किममुना ? शोकाग्निरेतन्मन-
स्त्वद्गेह हरिणेक्षणे ! दहति तद् द्रागेन निर्वापय ॥ ४१ ॥

(इति [1]मूर्च्छति ।)

**लक्ष्मणः**—(राम समाश्वास्य) आर्य ! किमेवमनुद्यमपरै स्थीयते [2]? । विलोकयाव क्वचनापि जानकीम् ।

**रामः**—वत्स ! देवापहृता क्व नाम देवी विलोक्यते ? । पश्य—

हृता वा राक्षसै सीता संहृता वा विलोकितुम् ।
आशासु याति मे दृष्टिर्निराशा तु निवर्तते ॥ ४२ ॥

**लक्ष्मणः**—आर्य ! तदप्युत्साहवत्तामेन कार्यसिद्धि । तदुत्थीयताम् ।

**रामः**—(उत्थाय किञ्चित् परिक्रामन् दिशो विलोक्य सकरुणम्)

दृष्टि स्पष्ट तटगतमपि प्रेक्षते नाश्रुमिश्रा,
दूराह्वाने न हि पटुरय बाष्पकुण्ठश्च कण्ठ ।
पादद्वन्द्व प्रचलितुमिद न क्षम मुद्यतो मे,
तद् वैदेहीं क्वचिद्विचिन्वन् वत्स ! पश्य त्वमेव ॥ ४३ ॥

**लक्ष्मणः**—(सविनयम्) एवमस्तु । (इत्यभिधाय पु परिक्रामन् पुन पश्चादवलोकते ।)

**रामः**—(तथाविध लक्ष्मणमवलोक्य सनिर्वेद त प्रति)

राज्यश्रिय च जननीं च वधू च मुक्त्वा,
मामन्वितो न सुखमेषि विशेषतोऽद्य ।
सीता न दृश्यत इतीच्छसि वत्स ! यातु,
म्यातु च मूर्च्छति मुहुर्मयि मन्दभाग्ये ॥ ४४ ॥

1 मूर्च्छित मा० । 2 °प्युत्साहवत्तामेव इ० ।

**लक्ष्मणः**—( निवृत्त्य ) आर्य ! [1]स्मिन्नमुदीर्यते ?।

स्वर्गस्थितोऽपि स पिता मम जीवतीव,
तीव्रप्रतापतपने त्वयि विद्यमाने ।
जीवत्यपि त्वयि सा जननी गताऽद्य,
सत्यं विदेहदुहिता यदि नाथ ! नास्ति ॥ ४५ ॥

**रामः**—वत्स ! केयमद्यापि सीतासत्ताया कदाशा ?। सर्वथा नास्त्येव जानकी। हा प्रिये ! हा वनवासैकदुःखभागिनि ! हा शिरीषकुसुमसुकुमारे ! कथम्भूताऽसि ?। ( इति मूर्च्छित पतति । )

**लक्ष्मणः**—( सास्रम् ) आर्य ! समाश्वसिहि समाश्वसिहि। कोऽयं सन्देहपदे नैराश्यनिश्चय ?।

( राम समाश्वसिति । )

**लक्ष्मणः**—आर्य ! यावदहं देवीमनलोक्य समागच्छामि तावद् देवेन धैर्यमवलम्ब्य मानेनैवात्र स्थातव्यम्। ( इत्यभिधाय निष्क्रान्त । )

**रामः**—( विलोक्य ) कथं प्रस्थित एव देवीविलोकनाय वत्सलक्ष्मण ?। तदहमपि पर्णशालाभ्यन्तरे निपुणतरमन्वेषयामि। ( इति तथाकृत्वा सास्रम् ) हा पर्णशाले ! त्वमपि मदीयचित्तवृत्तिरिव शून्याऽसि सम्प्रति सीतया विना। ( पुन प्राङ्गणे बकुलमवलोक्य सखेदम् ) हा प्रियतमाप्रवर्द्धित बकुलपादप ! त्वमपि मैथिलीं विना विनाथीभूतो मामनु करोषि। ( पुनराकाशे )

वारं वारं बकुलविटपी म्लानिमेति त्वदीय,
सोऽयं तोयैः सपदि तदिम सिञ्च सीते ! समेत्य ।
यत्सम्भूतं प्रथमकुसुमं प्राभृतीकुर्वता ते,
क्रीडाकोपक्षितिरिह मया त्वामनत्वाऽपि चक्रे ॥ ४६ ॥

तदन्यत क्वापि विलोकयामि ?। ( इति परिक्रामन्नग्रतो विलोक्य ) धिक् कष्टम्, अयमपि देव्या केलिकुरङ्गक परित्यक्ताहारो रामहतक इव [2]शून्यमानस इत इत परिभ्राम्यति। ( तमालिङ्ग्य ) हा पुत्रक ! क सा ते स्वामिनी ? ( इति रोदिति। पुनराकाशे )

क्रीडामृगोऽयं मृगशावनेत्रे !, त्वामीक्षितुं भ्राम्यति दिक्षु मूढ ।
सौमित्रिणा यत्र कुतूहलेन, हृते सबाष्पाऽसि हृतात्मजेव ॥ ४७ ॥

---

1 किमिदमु° मा०। 2 शून्यमना इत मा०।

( इत्यभिधाय मूर्च्छितः [1]पतति । )

☞ [2]लक्ष्मणः—( सहसोपसृत्य सास्रम् ) आर्य ! समाश्वसिहि समाश्वसिहि ।

रामः—( समाश्वस्य ) अयि वत्स ! दृष्टा जानकी ? । ☜

( लक्ष्मणः बाष्पमुत्सृजन्नधोमुखस्तूष्णीमास्ते । )

रामः—( सविमर्शमात्मगतम् ) न दृष्टा इत्यर्थतोऽभिहितं भवति । ( प्रकाशम् ) वत्स ! किमधोमुखस्तिष्ठसि ? । सम्प्रति तावदहं दुर्दैवेन निराशीकृतोऽस्मि सीताऽवलोकनविषये । तदेतदेवास्तु—

सप्ताङ्गं मम राज्यं हृतमर्द्धाङ्गं च मैथिली येन ।
अप्येष शेषमङ्गं गृह्णातु विधिः सुखी भवतु ॥ ५३ ॥

तदधुना गच्छतु भवानयोध्याम् । अहं पुनरमार्यः ( इत्यर्द्धोक्ते मौनमालम्ब्य शिरसि जटाः पाणिना परामृशति । )

लक्ष्मणः—( सास्रमात्मगतम् ) यथाऽयं जटापरामर्शः तथा तन्नूनमार्यः प्रियावियोगदुःखेन जीवितनिरपेक्षया वशीव प्रनज्यया ऽऽत्मानमवसादयितुमिच्छति । ( प्रकाशम् ) आर्य ! कोऽयमसदृशादेशो ममाऽयोध्यागमनाय ? । नन्ववधार्यताम्—

उद्यतस्य वनं गन्तुमनुगन्ता तवाऽभरम् ।
कार्यान्तरोद्यतस्याहमनुगन्ता तवाऽधुना ॥ ५४ ॥

रामः—( स्वगतम् ) अयमहमवगताभिप्रायोऽस्मि वत्सेन । भवतु । ( प्रकाशं लक्ष्मणं करे गृहीत्वा सगद्गदम् ) वत्स ! किमेतदपि दुःखं मया भवत्सहितेनैवानुभवनीयम् ? । तदलमाग्रहेण । [3]सेवयतु भवानयोध्याम् ।

लक्ष्मणः—( साश्रमुच्चैः [4]स्वरम् ) हा तात दशरथ ! श्लाघनीया भवतः पूर्वं विपत्तिः । इदानीं हा अम्ब कौशल्ये ! प्रगुणीकुरुष्व हृदयं पुनः कृतान्तवज्रप्रहाराय । हा कैकेयि ! सम्पूर्णास्ते मनोरथाः । ( इति मूर्च्छितः [5]पतति । )

रामः—वत्स ! समाश्वसिहि समाश्वसिहि । ननु त्वदेकालम्बनमिमं जनमुत्थाय किं न समाश्वासयसि ? । ( पुनराकाशे ) देवि विदेहसम्भवे ! किं वत्सलक्ष्मणेऽपि विस्मृतं तत् तादृशं भवत्या वात्सल्यम् ? । तथाहि—

---

1 पतितः भा० । 2 हस्तचिह्नान्तर्गतोऽयं पाठ दे० नास्ति । 3 °यतश्चाह पुरो गन्ताऽधुना पुन° दे० । 4 साश्र° दे० । 5 पतित° भा० ।

यस्मिन् कार्यवशाद् बहिश्चिरयति त्यक्त्वा ममाप्यन्तिकं,
'पम्पोपान्तगता समाकुलमतिर्मार्गे मुहुर्मार्गसे ।
तस्मिन् नो व्यसनैर्घनार्द्धिविषमावर्तप्रपाताचयो
नाभूते ' दिश दर्शनं तदहहशामूर्च्छापरे देवरे ॥ ५५ ॥

**लक्ष्मणः**—(समाश्वस्य विमृश्य च) आर्य ' देव्यास्तावन्निश्चयो हरणे, न पुनर्मरणे । तज्जीवता प्रयावृत्तिरपि सम्भाव्यते कदाचित् । तदितो दूरतरमपि गत्वा विलोक्यतां प्रवृत्तिरपि क्वापि कुतश्चिदुपलभ्यते । न ह्यप्रयतमानानामेवमेव साहसं कर्त्तुमुचितं भवति ।

**रामः**—यदत्र साम्प्रतं तद् निर्धार्यतामिति ।

(उभौ दक्षिणाभिमुखं परिक्रामतः ।)

**रामः**—(कियदप्यन्तरं गत्वा पुरो विलोक्य) अये ' हार इव पतितः पुरो दृश्यते । (गृहीत्वोपलक्ष्य च सास्रम्) वत्स ' निश्चितमसौ देव्याः कृतकण्ठविहारो हारः, तद् भवानप्यवलोकयतु । (इति हारं दर्शयति ।)

**लक्ष्मणः**—(गृहीत्वा सकरुणम्) हा देवि ' हा रामभद्रदयिते ' विभूषणशेषा वर्त्तसे । (पुनर्निपुणं निरूप्य) आर्य ' नाहं निश्चितमवगच्छामि । परमनेन तात्कालिकाभिज्ञानेन निश्चिनोमि, यदसौ देव्या इति । तथाहि—

सकज्जलैरश्रुजलप्रवाहैः, कलङ्कितो मौक्तिकहार एषः ।
महीसुताकण्ठवियोगदुःखदत्र दधातीव मलीमसत्वम् ॥ ५६ ॥

**रामः**—(हारं हृदये निधाय तं प्रति सकरुणम्)

मम प्रमोदहेतुस्त्वं तस्याः कण्ठमधिष्ठितः ।
हृदि न्यस्तोऽधुना हार ' प्रहार इव बाधसे ॥ ५७ ॥

(इति लक्ष्मणाय समर्प्य) वत्स ' निश्चितं केनापि नीयमानया देव्या निजगमनमार्गाय हारोऽयमिह प्रक्षिप्तः । तदनया एव दिशा गम्यताम् । (इति तथा कुरुतः ।)

**लक्ष्मणः**—(दूरादवलोक्य ससम्भ्रमम्) आर्य ' यथाऽयं कश्चिन्महागृध्रो रुधिरलोहितगात्रः पुनःपुनरुत्थित इव निद्रायमाणः पुरस्तादवलोक्यते तन्नूनमनेनैव मैथिलीकारीहता भविष्यति ।

**रामः**—( दृष्ट्वा ) यथाऽऽह भवान् । ( पुनः सकरुणम् ) हा प्रिये वैदेहि ! निस्सन्देहमधुनाऽविज्ञातविपत्तिरसि । ( पुनराकाशे )

त्वन्निर्माणपरिश्रमः समजनि व्यर्थः पृथुश्रोणि ! मे,
सम्पूर्णेन्दुरियं क्व नाम रमतामप्रेक्ष्य वक्त्रं तव[1] ।
शून्यं भूवलयं बभूव, विलयं सर्वे मम सम्पदा
प्राप्ताः साम्प्रतमन्तरेण भवतीं जातोऽस्मि जीवन्मृतः ॥ ५८ ॥

( इति मूर्च्छितः पतति । )

**लक्ष्मणः**—( वल्कलाञ्चलेन वीजयन् ) आर्य ! समाश्वसिहि समाश्वसिहि । नन्वेतमात्मकोपानले दुष्टविहङ्गममाहुतीकुर्म ।

**रामः**—( समाश्वस्य ) वत्स ! किमनेन तपस्विना निहतेन ? । निजदुर्दैवस्यायमीदृशः परिणामः ।

**लक्ष्मणः**—आर्य ! तथापि नैनं जीवन्तमुज्झितुमुत्सहे, तदनुमन्यतामिति ।

( उभौ तदभिमुखं परिक्रामतः । )

( ततः प्रविशति प्रहारवेदनां नाटयन्नुच्छ्वसितावशेषो जटायुः ।)

**जटायुः**—( मन्दाक्षरम् ) धिग् माम् , यदसाधितसुहृत्कार्य एव विपद्ये ।

**लक्ष्मणः**—( ससम्भ्रमं धनुषि शरमारोप्य ) रे रे गृध्राधम ! तिष्ठ तिष्ठ, सोऽहमिदानीं भवन्तमन्तकनिकेतनं प्रापयामि ।

**जटायुः**—( श्रुत्वा सक्रोधम् ) आः पिशाचपांसन ! मयि दशरथमित्रे स्थिते रामवधूमपहृत्य प्रयातुमिच्छसि ?, तदेष न भवसि । ( इत्युत्तिष्ठन् पुनः पतति । )

**रामः**—( श्रुत्वा ससम्भ्रमम् ) [3]वत्स ! सायकं संहर सायकं संहर । कोऽप्येष सुहृदिव दशरथरामनामग्रहणं कुरुते । तदुपसृत्य निपुणं निरूपयावः । ( इत्युपसर्पतः । )

**लक्ष्मणः**—हहो महाभाग ! कस्त्वमेवं व्याहरसि ? ।

**जटायुः**—( नेत्रे समुन्मील्य ) भद्र ! सोऽहमरुणसूनुर्जटायुरस्मि ।

**लक्ष्मणः**—( अपवार्य ) आर्य ! स एवायं तातमित्रं गृध्रराजो जटायुः ।

**रामः**—( उपसृत्य सविनयम् ) तात ! त्वन्मित्रस्य महाराजदशरथस्य प्रथमपुत्रस्त्वामयं रामनामा प्रणमति, अयं च ममानुजन्मा लक्ष्मणः ।

---

1 पतितः भा० । 2 °सुहृत्कार्यं दे० । 3 वत्स ! वत्स ! संहर सायकं संहर । को भा० ।

**जटायुः**—(दृष्ट्वा) वत्सौ! सम्पूर्णमनोरथौ भूयास्ताम्। (पुनः सगद्गदम्) अहो! प्रियमित्रदशरथ[1]शरीरसङ्क्रान्तसादृश्य पुनरपि मे स्मृतिपथमवतीर्णोऽसि।

**रामः**—(सखेदम्) तात! केन त्वमीदृशीमवस्थां नीतोऽसि?।

**जटायुः**—रावणेन।

**रामः**—कथमिव?।

**जटायुः**—वत्स! श्रूयताम्—

कृत्वा तपोधनतनुं दशकन्धरेण,
साध्वी बलादपहृता रुदती स्नुषा मे।
आक्रन्दितानि करुणानि निशम्य यातु,
तामागतोऽहममुना निहतोऽस्मि निघ्नन्॥ ५९॥

**रामः**—(सकरुणं लक्ष्मणं प्रति) वत्स! पतङ्गपुङ्गवमेतमेवं[2]विधमवलोक्य पुनर्नवी-भूतोऽद्य मे तातदशरथशोकः। हा तात जटायो! हा सूर्यसूतमग्रज! हा महासत्त्व-शिरोमणे! हा निष्कारणसज्जन! केनास्मत्सदर्थे परित्यक्तजीवितोऽसीति।

(उभौ शोचतः।)

**रामः**—(स्मृत्वा सचमत्कारम्) वत्स लक्ष्मण! नूनं प्रथममविदितवृत्तान्तं भवन्त-माक्षिपन्तं प्रहारवेदनाविह्वलः पक्षीन्द्रोऽपि राक्षसभ्रान्त्या 'पिशाचपामर!' [3]इत्याचचक्षे। (पुनर्जटायुषं प्रति सनिर्वेदमञ्जलिं बद्ध्वा)

न मयाऽस्ति समः पापी यत्कृते पुत्रवत्सलः।
तातश्च तातमित्रं च त्वमप्यस्तमिमा गतः॥ ६०॥

**जटायुः**—न किञ्चिदुपकृतं मया भवतः, त्वया तु महदुपकृतमनेन। पश्य—

मयाऽद्य मोचाटवीनामदाङ्की, न मोचिता यत्नवता वधूः सा।
प्राणान्तदर्थे त्यजता मयाऽऽत्मा, विमोचितः संसृतिबन्धनात्तु॥ ६१॥

(पुनः प्रहारपीडां नाटयन्नक्षिणी निमीलयति।)

**लक्ष्मणः**—(रामं प्रति) आर्य! परिज्ञातस्तातदारापहारी स निशाचरचण्डालः। तदिदानीम्—

---

1 'रघुनन्दनशरीरसङ्क्रान्तसादृश्य' पुनः' दे०। 2 'धं विधे' मा०। 3 इति प्रत्याच' मा०।

प्रथमं सीताहरणं द्वितीयमधुना पितृव्यसंहरणम् ।
दशवदनकदनकारणमुभयममूदावयोस्तदिदम् ॥ ६२ ॥

**जटायुः**—( पुनर्नेत्रे समुन्मील्य रामं प्रति ) वत्स ! सम्प्रति प्रस्थातुकामा इव मे प्राणाः, तत् प्रापय मां गोदावरीतीरम्, यथा तत्र जीर्णशरीरमिदमुत्सृज्य सूर्यरथाधिरूढस्य स्वपितुरुत्सङ्गमारोहामि । ( इति रामलक्ष्मणाभ्यां दत्तावष्टम्भो नदीं परिक्रामन् ) वत्स रामभद्र ! त्वत्सन्निकर्षादुन्मिषतीव मे ज्ञानचक्षुः, तदेतदाकर्णय सीताप्राप्तिकारणं मदीयमुपदेशवचनम् ।

**रामः**—( सविनयम् ) तात ! अवहितोऽस्मि ।

**जटायुः**—

पम्पामपास्तदुरितां सरसीमितस्त्वं
गत्वा विलोक्य शबरीं श्रमणां च तत्र ।
शैले ततः प्लवगपुङ्गवमृक्षमूके,
सुग्रीवमेहि स करिष्यति वाञ्छितार्थौं ॥ ६३ ॥

**रामः**—यदादिशति तात ।

( इति निष्क्रान्ताः सर्वे )

**पञ्चमोऽङ्कः समाप्तः ॥ छ ॥**

असौ वसन्तकालश्रीर्वस्तुपालः क्षमातले ।
प्राप्नुवन्त्युदये यस्य वृद्धिं सुमनसः पराम् ॥ ६४ ॥

---

१ °वन्तवधौ यस्य सा० ।

# षष्ठोऽङ्कः ।

( ततः प्रविशति माल्यवान् । )

**माल्यवान्**—( सचिन्तम् )

येनैकेन शिलीमुखेन समरव्याले स वाली हतो,
यस्यैकेन पदातिनाऽपि कपिना लङ्का सशङ्का कृता ।
देवेनापि निरस्तनाकपतिना साकं य एकः स्थितः,
सङ्ग्रामाय न माति मे विमृशतः स क्षत्रपुत्रो हृदि ॥ १ ॥

( पुरो विलोक्य ) कथमसौ वत्ससारणः ? ।

**सारणः**—( प्रविश्य ) आर्य ! प्रणमामि । ( इति तथाकृत्वोपविशति । )

**माल्यवान्**—वत्स ! कुतः समागम्यते ? ।

**सारणः**—काकुत्स्थकटकात् ।

**माल्यवान्**—वत्स ! विद्युज्जिह्वेनैव प्रच्छन्नवृत्त्या तत्र सुचिरमुषितेन सुग्रीवसख्य[1]वालिवधप्रभृति विभीषणसंयोगपर्यन्ता रामप्रवृत्तिरावेदिता । तदतः परमभिधीयताम् ।

**सारणः**—आर्य ! पृच्छामि किञ्चित् ? ।

**माल्यवान्**—ब्रूहि ।

**सारणः**—अपि परिज्ञायते किमपि वालिवधे कारणम् ? ।

**माल्यवान्**—वत्स ! नहि भवितव्यता कारणमपेक्षते । निपुणं पुनरन्विष्यता व्यक्तमिदमस्त्येव कारणम् । तथाहि—

सुग्रीवः सूर्यसुतः सूर्यान्वयसम्भवश्च रघुराजः ।
त्रातः स तेन गोत्री तद्धरितः सोदरादरितः ॥ २ ॥

**सारणः**—यथाऽऽह मातामहः । आर्य ! किं नाम विज्ञप्तं विद्युज्जिह्वेन हनूमतः समुद्रलङ्घनलीलायितम् ? ।

**माल्यवान्**—वत्स ! न विज्ञप्तमेव, किन्तु शल्यरूपतया निखातमि[2]दमस्मदीये हृदये । परं वैरिणोऽपि कृताद्भुतकर्माणः स्तुतिभाजनं भवितुमर्हन्ति । पश्य—

---

1 °वालिवध° दे० । 2 °मिदास्मदीयह° मा० ।

मा रावणावगणित शरणार्थिनं च,
काकुत्स्थ ! बुध्यस्व स एष विभीषणोऽस्मि ॥ ६ ॥

वाचं निशाचरवरस्य निशम्य तस्य,
व्योमाङ्गणप्रणयिनोऽथ गणं कपीनाम् ।
सक्रोधमुद्धृतदृषद्द्रुमरौद्रहस्त,
सहर्षमेवमुदतिष्ठदरे कनिष्ठम् ॥ ७ ॥

**सारणः**—ततस्ततः[1] ।

**माल्यवान्**—ततश्च विभीषणस्तान् वलीमुखमुख्यान् सरम्भमाणानालक्ष्य सलक्ष्मणं सुग्रीवमुद्ग्रीवमवलोकयन्तं च रामं प्रत्येवमुवाच—

लङ्केन्द्रेणाह्रिणाऽहं निहत इति रुषा नैष युष्मानुपेतो,
तेनैवायं यतो मे न च रुचिरतरं तत्पदं प्राप्नुयाम[1] ।
किन्तु ब्रह्मप्रसूतेरनुचितचरितं तं परित्यज्य राम !,
त्वामायातोऽस्मि धर्म्यं यदि वितथमिदं पूर्वजेभ्यः शपे तत् ॥ ८ ॥

**सारणः**—ततस्ततः ।

**माल्यवान्**—तदेववादिनि दशकन्धरानुजे 'मायावी कश्चिदस्मदीयच्छिद्रावलोकनार्थं रावणप्रयुक्तो राक्षसः क्षुद्रबुद्धिरिहाऽऽयातः । तत् सर्वथा मारणीय एवासौ' इत्यभिदधानेषु प्लवगप्रधानेषु रामः सामपूर्वमित्यवादीत्—सखे वानराधिराज सुग्रीव ! वत्स लक्ष्मण ! सर्वे च प्लवगपुङ्गवाः ! शृणुत यूयम्—

वक्राशयो वा सरलाशयो वा, न नाम वध्यः[3] शरणागतोऽसौ ।
न मृत्युभीतः शरणागतस्य, सभासि वाम परिपन्थिनोऽपि ॥ ९ ॥

**सारणः**—ततस्ततः ।

**माल्यवान्**—तदनन्तरं सकलवलीमुखसमुदयानुमोदितवचसा राघवेण नियुक्ताभ्यां सुग्रीवलक्ष्मणाभ्यां सबहुमानमानीय समुद्रसलिलैर्लङ्काधिपत्ये[4] विभीषणोऽभिषिक्तः ।

**सारणः**—कथमभिषिक्त एव ? ।

☞ [5]**माल्यवान्**—अथ किम् ? ।

---

1 नैवेत्रायं यतो मे न हि रु॰ मा॰ । 2 सर्वप्रकारमा॰ मा॰ । 3 वध्य स्वयमाग॰ मा॰ । 4 सलिलैर्लङ्का॰ मा॰ । 5 हस्तचिह्नान्तर्गतोऽयं पाठः द॰ नास्ति ।

**सारणः**—अहो ! विधातुरतुल्यैव वरनचा, यस्तादृशस्यापि निशाचरेश्वरस्य प्रतिमल्लपराभवमुद्भावयति ।

**माल्यवान्**—वत्स ! कृतमतीतवर्णनेन । कथय किमिदानीमध्यवस्यति यातुधानाधिपतिः ।

**सारणः**—आर्य ! समुत्तीर्णमहार्णवं सुवेलशैलनिकटनिवेशितकटकं राघवमनगम्य महाराजरावणो मां शुकं च शाखामृगसैन्यसङ्ख्यार्थं कृद्धलुब्धमीतावमानितो[1]पजापार्थं च दाशरथिशिबिरे प्रेषयामास । तदनन्तरमावां कृतवानरवेषौ तत्र निभृतं परिभ्रमन्तौ कुमारविभीषणपुरुषैरस्मन्मायावेदिभिर्बद्ध्वा रामसमीपमानीतौ ।

**माल्यवान्**—ततस्ततः ।

**सारणः**—ततश्च रामसमीपवर्तिना कुमारविभीषणेनेदमुदीरयाञ्चक्रे—'देव दाशरथे ! रावणमन्त्रिणौ शुकसारणाभिधानौ प्रधानवानरोपजापार्थमिहायातावेतौ वधार्हौ' इति श्रुत्वा रामभद्रेणाऽभिदधे—सखे विभीषण ! शान्तं पापम्, 'न कदाचित् प्रणिधयो वधमर्हन्ति' इति बन्धनादुन्मोच्येतामेतौ वेपमानशरीरौ । पुनरावां प्रत्येवमूचे—भद्रौ ! मा बिभीत, सकलमप्यस्मद्बलमवलोक्य चिकीर्षितं कृत्वा निवेदयतं निजस्वामिने[2] ।

**माल्यवान्**—( सकौतुकम् ) अयि ! दृष्टस्त्वया स रामभद्रः ।

**सारणः**—आर्य ! न केवलं दृष्ट एव, तत्त्वतोऽवगतोऽपि ।

**माल्यवान्**—कथय, कीदृगसौ ।

**सारणः**—आर्य ! श्रूयताम्—

> न क्रोधेऽपि वदत्यसावमधुरं, श्रुत्वाऽपि लोकोत्तरं
> न स्यादुद्धुरकन्धरो, न विधुरोऽप्यालम्बते दीनताम् ।
> किं भूयः कथितेन ? लोचनपथं काकुत्स्थवीरः स चेत्,
> सम्प्राप्तः कुरुते रिपोरपि ततः श्लाघासु घूर्णं शिरः ॥ १० ॥

**माल्यवान्**—ततस्ततः ।

**सारणः**—अथ यावदावामपगतबन्धनाभिशङ्कौ लङ्काभिमुखं प्रस्थितौ तावत् सुग्रीवं दर्शयता लक्ष्मणेन सोल्लुण्ठमभिहितौ—भद्रौ ! भवद्भ्यामिदमस्मदीयं वचनं श्रावयितव्यः[3] स विश्रवसस्तनयः ।

1 °पजपनार्थं मा० । 2 °माविष्कृतं मा० । 3 °च्यताम् येन वेप° दे० ।

सङ्ग्रामातिथिरेष वानरपतिर्लङ्कापते ! प्राप्तवान्,
अभ्याऽभीप्सितमर्हसि त्वमधुना कर्तुं प्रवीरोऽसि यत् ।
किञ्च स्थाम बभूव यत् तव हृदि श्रीरामरामाहृतौ,
तस्याऽऽविष्करणक्षणोऽयमधुना क्षिप्रं तदुत्सद्यताम् ॥ ११ ॥

अथाऽऽकर्ण्य तद्वचनं शुको लङ्केशनिकेतनं गतवान् । अहं पुनरिहाऽऽयातः ।

**माल्यवान्**—( सचिन्तम् ) वत्स !

धीराणां दशकन्धरो धुरि सुरे स्वामीव यः सेव्यते,
मन्ये नाऽन्यजनैः समं तमपि यः सेतुं बबन्धाम्बुधौ ।
तस्मीनापणमेतयोरिह रणं सम्भावयामि ध्रुवं,
तुल्यस्फूर्जितयोर्जयाजयविधौ मुग्धं पुनर्मे मनः ॥ १२ ॥

**सारणः**—एवमेतत् । कः सन्देहः ! । ( पुनः स्मृत्वा ) आर्य ! विस्मृतं किञ्चिदस्ति ।

**माल्यवान्**—किं तत् ? ।

**सारणः**—ततः शुके प्रस्थितवति काकुत्स्थेन किमपि कर्णे कथयित्वा तमनु अङ्गदः प्रेषितः ।

**माल्यवान्**—तदेहि तदवगमनाय राजकुलमेव प्रविशावः । ( इति निष्क्रान्तौ । )

॥ विष्कम्भकः ॥

( ततः प्रविशति सभामण्डपोपविष्टो रावणः शुको विभवतश्च परिवारः । )

**रावणः**—( सरोषं स्मृत्वा ) शुक ! किमुदीरितं दुरात्मना तेन वनितापमेन ! ।

**शुकः**—"सङ्ग्रामातिथिरेष वानरपतिः" श्लो० ११ ( इत्यादि पठति )

**रावणः**—अयि ! कोऽयमस्थाने काकुत्स्थदिम्भयोरभिमानग्रन्थिः ! । तथाहि—

कुर्वाणः कपिना परेण कन्दं वाली छलेनाऽऽहतो,
हेतुः सेतुविनिर्मितौ नलकम्पस्पर्शप्रभावोऽभवत् ।
तद्वीरोन्मत्तानिमित्तनियता किं नाम रामस्य ! यत्,
तद्दत्पुरुगुम्भरोगभिन्नमिति स्थानस्थितो जल्पति ॥ १३ ॥

**शुकः**—देव ! वैदेहीविरहविक्लवयोर्नरयोः अनन्तानि न कर्णे कर्णीयानि ।

**रावणः**—(सीतां स्मृत्वा ससन्तापमात्मगतम्) देवि ! विदेहराजात्मजे ! केयमयापि निर्दयता ?—

चाटुकोटिघटनापरे पुरः, पादयोः प्रणमति प्रतिक्षणम् ।
दित्सति स्वमपि देवि ! जीवितं, रावणे किमिव[1] न प्रसीदसि ? ॥१४॥

अपि च—

त्वदर्थिनं सम्प्रति मा प्रहर्तुमुभौ स्थितावुद्यतचण्डचापौ ।
साध्यस्तयोस्तन्वि ! ममैष रामः, कामः प्रसादस्य तु तावकस्य ॥ १५ ॥

(पुरो विलोक्य प्रकाशम्) अये ! कोऽयं मद्द्वारप्रविष्टो मर्कट इव मध्येसभमभ्येति ?।

(ततः प्रविशत्यङ्गदः।)

**अङ्गदः**—(अग्रतो दृष्ट्वा) स एवायं दशाननः। (तथाकृत्वा) भो लङ्केश्वर ! वालिसूनुरहमङ्गदः काकुत्स्थादेशेन भवत्सदेशमागतः, तन्निशाम्यताम्—

आदिष्टं रघुपुङ्गवेन तदिदं यत् त्वं पुलस्त्याङ्गभूः,
सोढं दुर्ललितं तदेतदभयं प्राणेषु दत्तं तव ।
सीतामर्पय मे विभीषणमितः प्रीत्या नय स्वान्तिकं,
सुग्रीवस्य रुषं ततः समुदितावावां हरिष्यावहे ॥ १६ ॥

**रावणः**—(श्रुत्वा सोल्लुण्ठम्) ननु भोः शाखामृग ! कोऽयं रामो योऽस्मानेवमादिशति ? रावणगृहीतां च सीतामभिलषति ? ।

**अङ्गदः**—निशाचरेश्वर ! कर्मणैवायमात्मानं प्रकाशयिष्यति ।

**रावणः**—किं तत् कर्म ? ।

**अङ्गदः**—यत् त्वदीयापराधस्य प्रायश्चित्तम् ।

**रावणः**—(स्वगतम्) अहो ! धृष्टत्वं मर्कटापकृष्टस्य । (पुनः सवितर्कम्)

सोऽहं किं न भवामि ? येन समरान्निर्जितो वासवः,
स्वप्नः किं नु ? मतिभ्रमः किमुत मे ? किं चेन्द्रजालोदयः ?
वाचाटः कपिकीट एष जटिना केनापि[2] यत् प्रेषितः,
स्वैरं व्याहरते निशम्य तदपि क्षाम्यत्यहो ! रावणः ॥ १७ ॥

---

1 किमिति भा०। 2 °नापि च प्रे° दे०।

**अङ्गदः**—(सविमर्शमात्मगतम्) कथं किमपि चिन्तयन्निवायमवलोक्यते ? । भवतु, ब्रवीमि तावत् । (प्रकाशम्)

प्रष्टव्योऽसि निशाचरेश्वर ! किमप्यन्याय्यमेतत् त्वया,
कुर्वाणेन किमात्मपूर्वपुरुषः स्रष्टा न चित्ते धृतः ? ।
शौर्ये चौर्यकलङ्क एष निपतन् नालोकितः ? किञ्च किं,
देवोऽसौ खरदूषणत्रिशिरसां हन्ताऽथवा न श्रुतः ? ॥ १८ ॥

**रावणः**—(सरोषम्) आः प्लवङ्गमापसद ! वालिव्यापादकपादजीविन् ! निःसत्त्व ! मया खलु निखिलदिक्पालशिरःशूलेन शूलपाणिपूजोपहारीकृतनिजमौलिना यथा तथा वा विरचितानां कार्याणां किं ते युक्तायुक्तविचारचापलेन ? ।

**अङ्गदः**—भो कोणपाधिप ! मा कुप्य । समाकर्णय व्याहरणकारणम्—

एषा पुरी परिजनोऽयमियं समृद्धि-
स्त्वद्भूतपूर्वदिग्महीभ्रमिदं च देहम् ।
दीना दशा दशमुख ! द्रुतमेष्यतीति,
त्वच्चिन्तयैव नितरां मुखरीकृतोऽस्मि ॥ १९ ॥

**रावणः**—(सरोषम्) रे दुर्मुख वलीमुख ! मयि त्रिभुवनविजयिनि प्रभवत्यपि [1]भवच्चिन्तनीया किमेता यातुधा[2]नराजधानीसमृद्धयः ? । को वा मदीयपदातेरपि पराभवाय प्रभविष्णुः ? । तथाहि—

निस्त्रिंशदण्डदलितैः स्वशिरोभिरेभि-
रभ्यर्चितस्त्रिपुरवैरिविभुः स येन ।
कस्तस्य वीक्षितुमपि क्षमते प्रकोप-
वक्रभ्रु वक्त्रदशकं दशकन्धरस्य ? ॥ २० ॥

**अङ्गदः**—

आः पौलस्त्य ! किमेवमुत्पुलकितः स्वस्मै मुहुः श्लाघसे ?,
यत् तोषं गमितः स्वमौलिकमलैर्बालेन्दुमौलिस्त्वया ।
प्राचीनं हि विरञ्चिपञ्चमशिरश्छेदापराधं स्मरन्,
देवोऽदत्त वरं [3]तवातिकृपया कायप्रतं कुर्वत [4] ॥ २१ ॥

---

1 किन्तु किं भा० । 2 'पादोपजी' भा० । 3 तव चित्त' भा० । 4 'धानीयराज' भा० । 5 तथापि कु' दे० ।

**रावणः**—( चन्द्रहासमुल्लासयन् सक्रोधम् ) रे कपिपामन !

न दूत इति वध्यसे व्रज निशानमीष्टानऽमी
युधे भवन सायुधा यदयमेति लङ्केश्वर ।

**अङ्गदः**—

निशाचरपते ! शृणु त्वमसि वालिना पालित
स्तत प्रहरतां कथ त्वयि तदङ्गभूरङ्गद ? ॥ २२ ॥

पर द्रष्टाऽसि यद् विधास्याम । ( इत्यभिधाय निष्क्रान्त । )

( नेपथ्ये कलकलादनन्तरम् )

युद्धावेशविशिष्यमाणवदनच्छायोदयस्याऽऽज्ञया,
श्रीरामस्य वदामि व कपिवरा ! सर्वान् सगर्वानहम् ।
नि सन्धानविधि समागमदसौ वाले सुतं स्तद् द्रुत,
स्थूला शैलशिलास्तरूनपि गुरून् पाणौ कुरुध्व युधे ॥ २३ ॥

अपि च—

दधिमुख ! मुखे सेनायास्त्व भव प्लवगर्वैर्
र्भज गज ! दिश वामा, भीम ! त्वमाश्रय दक्षिणाम् ।
चरमखिलमप्येतच्चिन्त्य त्वयाऽद्दितेन यत्,
सुरगुरुरपि ल्होतु शक्ति गवाक्ष ! तवाऽक्षम ॥ २४ ॥

**रावणः**—( श्रुत्वा सावज्ञम् ) शुक ! कोऽयमेव वानरेषु व्याहरति ? ।

**शुकः**—( प्रत्यभिज्ञाय ) देव ! सुग्रीवेणेदमुदीरितम् ।

**रावणः**—कस्कोऽत्र भो ! [1] ।

( प्रविश्य )

**प्रहस्तः**—समादिशतु देव ।

**रावणः**—हे महाप्रधान ! त्वमपि यातुधानसुभटानुत्साहय सन्नाहग्रहणाय । ( पुन सानुशयम् ) अथवा—

हुङ्कारोऽपि निशाचरान् समरादेशाय यस्य मे,
मुभ्रूक्षादपि मङ्गलप्र महिष प्रेमाधिराधिष्ठित ।

---

1 'शरद् पु०, ग०।

यातो वातमृगः शृगालतुलनां श्रुत्वाऽपि सिंहध्वनिं,
सेनासंहननेन मर्त्यहतये सोऽहं वहामि त्रपाम् ॥ २५ ॥

**प्रहस्तः**—देव निशीथिनीचरनाथ! तथ्यमेवैतत्। कस्तेन भवता सह त्रिभुवनेऽपि वीरतुलामवलम्बते?।

छिन्नेषु मूर्द्धसु पुनश्च भवत्सु यस्य,
प्रालेयपर्वतसुतादयितप्रसादात्।
एकोदरेण शिरसा दशमेन सद्य-
स्तन्मृत्युजन्मजमशौचमवाप्यते स्म ॥ २६ ॥

तथाऽप्यनीकनीतिर्नातिक्रमणीया। (इत्यभिधाय निष्क्रान्तः।)

**रावणः**—शुक! समुत्तिष्ठ, यथा प्रासादशिरोऽधिरुह्य[1] दुष्टमनसां वनौकसां विलसितमवलोकयाव.। (पुनः प्रतीहारीं प्रति) कादम्बरि! भवत्याऽपि देवी मन्दोदरी तत्र समानेतव्या।

**कादम्बरी**—[1]जं देवो आणवेदि। (त्ति निष्क्रान्ता।)

**शुकः**—(उत्थाय) इत इतो देव। (इत्युभौ प्रासादाधिरोहणं नाटयत.।)

(ततः प्रविशति मन्दोदरी प्रतीहारी च।)

**मन्दोदरी**—(सेर्ष्योद्वेगम्) [2]कादंबरि! किण्णाम अण्णासत्तहिययस्स अज्जउत्तस्स समीवगमणेण[1], परं ण सक्कीयदि दुण्णयपयट्टस्स पइणो अच्चाहिदट्ठाणमुवक्खिदुं। दिट्ठो तए इक्कस्स हणुमंतस्स परक्कमो। तारिसाणं वाणरसुहडाणं कोडी संघडिया सुणीअदि। अपरं च—रक्खसरज्जमम्मवेइणो विभीसणस्स वयणेसु दिण्णकण्णो राहवो [2]चिट्ठदि, ता वेवदि [3]मह हिययं। जइ कहं पि सुअ-सारणनिवेदिदसमुद्दलंघणप्पहावाभिसङ्किदो अज्जउत्तो समरादो विरमदि ता सोहणं भोदि।

---

१ यद् देव आज्ञापयति।

२ कादम्बरि! किन्नाम अन्यासक्तहृदयस्य आर्यपुत्रस्य समीपगमनेन?, परं न शक्यते दुर्नयप्रवृत्तस्य पत्युः अत्याहितस्थानमुपेक्षितुम्। दृष्टस्त्वया एकस्य हनूमतः पराक्रमः। तादृशानां वानरसुभटानां कोटिः संघटिता श्रूयते। अपरं च—राक्षसराज्यमर्मवेदिनो विभीषणस्य वचनेषु दत्तकर्णः राघवः तिष्ठति, तद् वेपते मम हृदयम्। यदि कथमपि शुक-सारणनिवेदितसमुद्रलङ्घनप्रभावाभिशङ्कित आर्यपुत्रः समराद् विरमति तत् शोभनं भवति।

---

1 'ह्य सुप' द०। २ वहदि मा०। 3 मे हि' मा०।

**कादम्बरी**—[1]देवि! किं कइया वि स तिहुअणिक्कवीरो सत्तुसंकाए लङ्कावई सम[1]रादो उवरमदि? । ता एस दढाहंकारो कज्जपज्जंतमपिक्खिय ण णिअत्तिस्सदि ।

**मन्दोदरी**—( सोद्वेगम् ) कादबरि! कज्जपज्जंतो कीरिसो हविस्सदि? त्ति ण जाणीयदि । भोदु । जं अम्हाणं दिव्व करिस्सदि तं हविस्सदि त्ति ।

( उभे परिक्रामतः । )

**कादम्बरी**—( पुरो विलोक्य ) देवि[3]!. एस दहकंठदेवो [2]इदो चिट्ठदि ता [3]उवसप्पीयदु । ( इति तथाकुरुतः । )

**रावणः**—( मन्दोदरीमवलोक्य ) प्रिये! इदमासनमास्यताम् ।

**मन्दोदरी**—( तथाकृत्वा उत्तरां दिशमवलोक्य साशङ्कम् ) [4]अज्जउत्त! महंतं खु एदं वाणरसेण्णं ।

**रावणः**—( सावज्ञं स्मित्वा ) प्रिये! को नाम तृणसमूहदाहे दवदहनस्यायासः? । ( पुनः शुकं प्रति ) भो! चिरपरिशीलितवनीमुखमण्डलो भवान् । अवगमयतु मामेतान् यथार्थकथनेन ।

**शुकः**—( सविनयम् ) स्वामिन्! समीचीनमवेक्षमाणस्य ममाऽभयप्रदानमस्तु ।

**रावणः**—अस्त्वेवम् ।

**शुकः**—( अङ्गुल्या विनिर्दिशन् ) अवधार्यताम्—

विश्वविश्रुतवलो नलनामा, विश्वकर्मतनयः कपिरेषः ।
यत्करस्तरणकारणमासीदम्बुधिबन्धविधाने ॥ २७ ॥

**रावणः**—( सरोषमात्मगतम् ) स एष विशेषतोऽस्मत्पराकारकारणं संहरणीय एव । ( प्रकाशम् ) अन्यतो दर्शय ।

---

१ देवि! किं कदाऽपि स त्रिभुवनैकवीरः शत्रुशङ्कया लङ्कापतिः समराद् उपरमति? । तद् एष दृढाहङ्कारो कार्यपर्यन्तमप्रेक्ष्य न निवर्त्स्यते ।

२ कादम्बरि! कार्यपर्यन्तः कीदृशो भविष्यति? इति न ज्ञायते । भवतु । यद् अस्माकं दैवं करिष्यति तद् भविष्यतीति ।

३ देवि! एष दशकण्ठदेवः इत तिष्ठति, तद् उपसर्प्यताम् ।

४ आर्यपुत्र! महत् खलु एतद् वानरसैन्यम् ।

---

1 °रादो णिअत्तेदि भा० । 2 3 °उअसप्पीअदु° भा० । 4 अउज्जो चि° भा० । 5 उअसप्पीयदु दे० ।

शुकः—(दृष्ट्वा प्रत्यभिज्ञाय च) देव!

पाता पुलिन्दापयसां गिरेश्च, पाताऽर्बुदाग्न्यस्य सुतश्च बाले ।
एकोऽपि रक्षामभियोद्धुमिन्द्रं त्वत्खण्डदोर्दण्डमदोऽङ्गदोऽयम् ॥ २८ ॥

रावणः—(सोपहासम्) सोऽयं पण्डितम्मन्यः, यस्मात् किं वालिवैरनिर्यातनमनिष्यति ।

मन्दोदरी—अज्जउत्त! एस काउरिसाण पढमगुदाहरणं ।

रावणः—(विलोक्य) शुक! कोऽयं वानरनिस्थिनीरसम्थापयनितस्ततो बहुधा भ्रमतीति ।

शुकः—देव! श्रूयताम्—

प्रयासीदिति मकरे प्रतिदिशं कीनाशतुल्यः प्रभो,
कीशानामयमुन्नतोऽत्र युगपत् सैन्यानि विन्यस्यति ।
यः सह्योन्नतशैलमौलिविपिनक्रीडोद्धतां गोमती
सीताभ्र परिरम्भणेन शमयत्याशामतोयन्त्रटाम् ॥ २९ ॥

रावणः—कथाय वानरः स्फुरदितरेतरनिम्बरः पुरतो विस्फुरति ।

शुकः—स्वामिन्! अवधार्यताम्—

बालत्वनगरीविजारकपिनः सोऽयं कपिग्रामणी,
संरम्भेण विजृम्भते रणभरारम्भाय रम्भाहयः ।
न स्थाम्नोद्धरकन्धरैरपि धैर्यस्य प्रवृद्धस्य,
मदः क्षमसुदर्शनानलस्ते पाणिप्रहाराशनि ॥ ३० ॥

रावणः—कस्येदं कांस्यताडयोरिव कर्णकटकमारोपयते ।

शुकः—स्वामिन्!

पारियात्रगिरिगह्वराश्रये, यत्र सन्ति तदिदं स्थिरमोत्र ।
तत्र कोटरचर निर्मितस्य, सिद्धि भेद्गुरुनाम पनसस्य ॥ ३१ ॥

निलो नाम रामस्य कार्ये कल्पितजीवित ।
कपि कोपोन्नत सोऽय लङ्कामालोकते मुहु ॥ ३२ ॥

किञ्च—

जाम्बवानिति नवाम्बुदप्रभ, सोऽयमृक्षपतिरीक्ष्यतामित ।
य सुरारिसमरे पराक्रम, दर्शयन् वरमवाप वासवात् ॥ ३३ ॥

**रावणः**—कोऽसौ कासरपीवराकार कपि पुरतो निस्फुरति ?।

**शुकः**—देव ! श्रूयताम्—

गन्धर्वकन्याजननीकृशानुरुत्पादको यस्य नमस्यशक्ते ।
द्रोणाद्रिकान्तारविहारशील, स एप नील प्रवणो रणाय ।३४॥

(अग्रतोऽपि दर्शयन्) इतोऽपि ¹दृश निवेशयतु देव —

सुषेण सोऽय य निमपि कपिवेपेण जगति,
द्विपद्दर्पाटोपप्रसनपटुतेजा विजयते ।
पिता यस्तारायास्तरणिचरणाराधनधनो,
मनोज्ञेषु क्रीडा चरमगिरि²कुञ्जेषु कुरुते ॥ ३५ ॥

एते च प्रसिद्धपराक्रमा प्लवङ्गमा प्रभुणा परिभाव्यन्ताम्—

हर्म्यं यस्य हिरण्मय क्षितिधर सोऽय हरि केसरी,
धुर्योऽसौ बलशालिना शतबलि³ कामरूपी कपि ।
सिन्दूरद्युतिरन्तिकेऽस्य गवय कृत्यारिवीरस्मय
स्तस्याग्रे बलिसूदनद्विरदनामकन्दी च सम्मादन ॥ ३६ ॥

अपरानप्येतान् शरभवृषभगन्धमादनमेन्दद्विविदप्रभृतिप्लवगयूथपतीनतीतसङ्ख्यान् सङ्ख्याय निबद्धबुद्धीनवधारयतु देव । (इति सर्वान् दर्शयति।)

**रावणः**—कथाय सरम्भावसरे समाश्रितमौनमुद्र क्षुद्रवानरो गभीरतागुणभानन मिवात्मान⁴ सम्भावयति ?।

**शुकः**—(दृष्ट्वोपलक्ष्य च सोद्वेगमात्मगतम्) हन्त ! (हनुमन्तमुद्दिश्य) दशकन्धरस्याऽयमनुयोग, तत कथमेनमजनातनुजमुद्वेजकचरित स्वामिने निवेदयामि ?। भवतु। (प्रकाशम्)

1 दृशं दिशतु भा०। 2 °कुञ्जेषु द०। 3 °बलि शुर° भा०। 4 °मात्मान प्रति ! हन्त ! भा०।

वरानिधिं राक्षसराजधानीमक्षाभिधानं युधि यः कुमारम् ।

( इत्यभिधाय तूष्णीमधोमुखस्तिष्ठति । )

**रावणः**—( तादृशं शुकमवलोक्य सविमर्शम् )

अतीयिवान् ज्वालितवान् जघन्वान्,
सोऽयं हनूमानिति वाक्यशेषः ॥ ३७ ॥

**मन्दोदरी**—( दृष्ट्वा सखेदम् ) ऐसो सो हदासो वाणरपसणो जेण लङ्कापुरीए[1] असुदपुव्वो तादिसो पराहवो दसिदो ।

**रावणः**—( शुकं प्रति साहङ्कारम् ) शुक ! किमेवमधोमुखस्तिष्ठसि ? । ननु दुरवलिप्तानामेषां नर वानराणां एककालमेव प्रतिक्रियां करिष्यति रावणस्य कृपाणदण्डः । ( इति च दहासमुल्लासयति । )

**शुकः**—देव ! को नाम नैव मन्यते ? ।

**प्रतीहारी**—( शुकं प्रति ) अज्ज सुअ !—

णिप्फुरउ ताव गव्वो सव्वाण वाणरप्पवीराण[2] ।
पिक्खइ न हु दहकण्ठो दिट्ठीए जाव रुद्दाए[3] ॥ ३८ ॥

**शुकः**—( आत्मगतम् ) मनागनुवजामि स्वामिनो मनोवृत्तिम् । ( प्रकाशम् ) देव ! निश्चितं प्रथममसौ तापसः[4] सङ्गराडम्बरमुद्भाव्य पश्चादनुस्मृतभवदीयभुजप्रभावा[5]भिशङ्कितः कृपणीभूय सीतां प्रार्थयिष्यते ।

**रावणः**—शुक !

सहैव हरिसेनया निजनतभ्रमालिर्मुहु-
र्यदि प्रणिपतत्यसौ तदपि नास्य सीतां ददे ।
यतः स खर दूषण त्रिशिरसां वधादुत्थितो,
न रामशमनं विना विलयमेति कोपानलः ॥ ३९ ॥

---

१ एष स हताशो वानरपाशनो येन लङ्कापुर्यामश्रुतपूर्वस्तादृशः पराभवो दर्शितः ।
२ आर्य शुक !—निस्फुरतु तावद् गर्वः सर्वेषां वानरप्रवीराणाम् ।
प्रेक्षते न खलु दशकण्ठो दृष्ट्या यावद् रुद्रया ॥ ३८ ॥

---

1 °लंकाणयरीए मा० । 2 °रड ताव द० । 3 रुद्धाए मा० । 4 देव ! नन्वसौ तापसः मा० । 5 °दनुसर्पन् भव° मा० ।

(पुनश्च सावष्टम्भम्) किं बहुना ? । श्रूयतामयमस्मदीयनिश्चयः—

जीवन् ददे न वैदेहीं सन्देहमिह मा कृथाः ।
युद्धे हि विद्धि विध्वस्तं रावणं सह बान्धवैः ॥ ४० ॥

**शुकः**—(ससम्भ्रमम्) शान्तं पापम् । प्रतिहतममङ्गलम् । किमिदं "राघवम्" इति वक्तव्ये विपरीतमभिहितं देवेन ? ।

**रावणः**—(सवैलक्ष्यम्) शुक ! क्रोधावेशोऽयमस्मानेव स्खलयति । (पुनर्वानरसेनामवलोक्य) कश्चायं कपियूथपैः सङ्गरावेशविवशैरपि सविनयमुपगम्य विज्ञप्यमानप्रभुतामिव प्रकाशयन्नास्ते ? ।

**शुकः**—(निपुणं निरूप्य) स्वामिन् ! समाकर्ण्यताम्—

केषामेष कथयति दशग्रीव ! सुग्रीवनामा,
धामान्याजौ न भुजतरसा तिग्मभानोस्तनूजः ? ।
यस्याऽऽदेशं शिरसि हृदये रामकार्यं च धृत्वा,
कीशाः क्लेशं नहि बुबुधिरे बध्यमानेऽपि वार्द्धौ ॥ ४१ ॥

तदुपान्तवर्ती चायं कुमारविभीषणः ।

**रावणः**—(सक्रोधावज्ञम्) किमनेन दुरात्मना कुलाङ्गारेण ? । दर्शयाऽग्रतः ।

**शुकः**—(अङ्गुल्या निर्दिशन्) तावेतौ तापसनेपथ्यौ दाशरथी । तदवधारयतु देवः—

एतयोर्दशरथप्रसूतयोराकृतिप्रकृतिविक्रमाः समाः ।
लक्ष्यते जगति लक्ष्मणः पुनर्नेमिनैव रघुरेष रामतः ॥ ४२ ॥

अपि च—

सङ्ग्रामाय गृहीतधन्वशरधिः सोऽयं सुमित्रासुतः,
पात्रं देव ! य एक एव भुवने शौण्डीर्यसौन्दर्ययोः ।
ज्येष्ठे भ्रातरि यस्य भक्तिमतुलामालोकयन्नुन्मनाः,
*सुग्रीवश्च विभीषणश्च भजति व्रीडावनम्राननः ॥ ४३ ॥*

तदनन्तरश्च आर्य !

अयं रामः श्यामः कमलदलदीर्घाक्षियुगलो,
गले गृह्णातीव प्रहपतिमहांसि स्वमहसा ।

1 १ °नव विस्मारयति मा० । 2 °मुपगम्य विकल्प्यमान मा० । 3 °याभि द । 4 भवतो व्रीडावनम्राननो मा० । 5 °मह स्वन महसा मा० ।

प्रमोदे वा प्राप्ते महति गहने वा विधिवशाद्,
विकारं नाकारं प्रथयति यदीयं कथमपि ॥ ४४ ॥

अपरं च—

निर्मूलिताखिलनृपान्वयनामजाम-
दग्न्योग्रगर्वगरलग्रसनैककण्ठं ।
विश्वत्रयीविदितविक्रमशालिनालि
हृत्चक्रमङ्क्रमितसायक एष रामः ॥ ४५ ॥

**रावणः**—स एष मुमूर्षुस्तापसापसदः सुखशयितं मृगराजमुज्जागरयति । (इति निपुणं राममन्विष्यति ।)

**शुकः**—(तादृशं रावणमालोक्य सविमर्शमात्मगतम्) अयमनेकभावभावितान्तःकरणो महाराजरावणः सुचिरं राघवमालोकयन्नास्ते । तथाहि—

सीता चित्ततरेयं विषय इत्याकुञ्चितामीर्ष्यया,
बध्नाति स्म समुद्रमद्रिभिरिति स्फारीकृता विस्मयात् ।
व्यग्रं सूर्पणखामुखं विरचयामासेति रोषारुणां,
देवो दाशरथौ निशाचरपतिर्दत्ते दृशां विंशतिम् ॥ ४६ ॥

**रावणः**—(सरोषं निःश्वस्य कृपाणं परामृशन् तं प्रति)

श्रुत्वाऽपि शत्रुरिति तं च निरीक्ष्य साक्षात्,
तत्रापि मानुषममुं पशुमिद्ध गुप्तम् ।
हे चन्द्रहास[1] परहाय निरम्बमानं,
शील कलङ्कयसि किं तदमर्षणीयम्[2] ॥ ४७ ॥

(पुनर्मन्दोदरीं प्रति) देवि! समुत्थीयतां यथेमान् नरवानरान् दुःशिक्षितान् निश्चयाम । शुक! भरताऽपि प्रचलिताया वानरवरूथिन्याः मितिं समागत्य तत्प्रवृत्तिरस्मान् मावेदनीया । (इत्यभिधाय मन्दोदरीप्रतीहारीभ्यां सह निष्क्रान्तः ।)

(नेपथ्ये कलकलादनन्तरम्)

हे देवान्तक[3] हनुमन्तमपि त्वं हेलया क्षम,
होमार्थी समरान्नरान्तक[4] न कम्पमायुद्धे त्वयि[5] ।

1 °लमवगो° भा० । 2 °वमवलो° भा० । 3 मुखमर° भा० । 4 °मर्षय मे दे० ।

सन्धेहि त्वमहो! महोदर! शर कोदण्डदण्डेऽधुना,
सम्प्राप्त प्रधनोत्सवाय भवता दिष्टोऽयमिष्टो यत ॥ ४८ ॥

**शुकः**—(श्रुत्वा सवितर्कम्) कथमसौ महाराजरावणादेशेन प्रहस्त समस्तानपि यातुधानप्रधानसुभटानेवमुत्साहयति[2]। (पुनरन्यतो निरीक्ष्य) अये! कथमितोऽपि—

बूत्कारैर्बधिरा धरा विदधत क्रोधारुणेराननै-
दिग्दाहभ्रममन्तरिक्षगतय क्षिप्र दिशन्तो द्विषाम्।
कल्पान्तोद्धतवारिवारिधिचलत्कल्लोललीलाभृत,
सुग्रीवेण समीरिता सरभस धावन्त्यमी वानरा ॥ ४९ ॥

तदिद स्वामिने निवेदयामि। (इति प्रासादादवतरन्नग्रतो विलोक्य) कथमसौ कुमारविभीषणस्य विश्वासपात्रमस्मन्मित्र प्रच्छन्नवृत्तिर्विहङ्गवेग समागच्छति?। तदेनमाहूय वार्तयामि। (इति शब्दायते)

(प्रविश्य)

**विहङ्गवेगः**—सोऽय शुक समाकारयति माम्। (इत्युपसर्पति।)

**शुकः**—सखे! निमेषमुत्सुकतया वर्तसे?।

**विहङ्गवेगः**—प्रेषितोऽस्मि देव्या सरमया कुमारविभीषणसमीरम्, यथा सङ्ग्राम कामस्य महाराजरावणस्य प्रयाणकप्रवृत्तिं गत्वा विज्ञपयेति।

**शुकः**—क्वेदानीं देवी सरमा?।

**विहङ्गवेगः**—अशोकवनिकाया सीतासन्निधाने।

**शुकः**—सखे! समुचितमेव रामविभीषणभार्ययोरेकत्रावस्थानम्। कथ च सा सम्प्रति वर्तते विदेहराजात्मजा?।

**विहङ्गवेगः**—(सकरुणम्) वयस्य! [2]तदेतदयुत ([2]दनुक्त) मेव श्रेय। यत—

निमीलिताक्षी गलदश्रुमिश्रां, भूपृष्ठशय्यामधिशय्य सीता।
निरन्तरं ध्यायति राममेव, तन्नामसङ्कीर्तनशुष्ककण्ठी ॥ ५० ॥

केवलं त्रिजटासरमयोराश्वासनवचनैर्जीवित धारयति। (पुन सचमत्कारम्) परम-परमप्येतदाकर्ण्यताम्—

---

1 °या भव° द०। 2 तदेतदेवास्तु। यत आ०।

दुःखाग्निदूनाऽपि तनुर्मनोज्ञा, म्लानेऽप्यलकेऽप्युज्ज्वलता मुखेन्दौ ।
विधिर्विरुद्धोऽप्यपहर्तुमीशस्तस्याः प्रमोदं न तु सुन्दरत्वम् ॥ ५१ ॥

**शुकः**—वयस्य ! यद्येवं न स्यात् तत् कथमसौ मन्मथातुरतया निशाचरपतिर्निपतेत् ? । तदिदं सञ्चरितवानरवाहिनीवृत्तं प्रभवे निवेदयामि । ( इति निष्क्रान्तः । )

**विहङ्गवेगः**—( परिक्रामन्नग्रतो विलोक्य ) स एष कुमारविभीषणो रामभद्रेण सह सुवेलशैलशिखरावस्थितो लङ्कामवलोकयन्नास्ते । तदुपसर्पामि । ( इति तथा करोति । )

( ततः प्रविशति रामो विभीषणश्च । )

**रामः**—( समन्तादवलोक्य ) सखे विभीषण ! यथास्थानमवस्थापितेषु वानरयूथाधिनाथेषु सज्जीकृतैव सुग्रीवलक्ष्मणाभ्यां सङ्ग्रामसामग्री । किमिदं मन्त्यादवृन्दं लङ्कापुरीगोपुरान्निर्गच्छदिव निरीक्ष्यते ? ।

**विभीषणः**—देव ! सम्यगवगम्य विज्ञपयामि । ( इति अवलोकयति । )

**विहङ्गवेगः**—( उभौ प्रणम्य विभीषणं प्रति ) कुमार ! सोऽयं महाराजरावणप्रगुणितसमग्रसैनिकनिकायः समीकाय समभ्येति । ( इति दर्शयति । )

**रामः**—( सोत्साहम् ) कथं लङ्केश्वरः स्वयमेव समागच्छति ? ।

**विहङ्गवेगः**—अथ किम् ? ।

( नेपथ्ये कलकलः )

**विभीषणः**—( श्रुत्वा साश्चर्यम् ) विहङ्गवेग ! कोऽयमायोधनभूमिकायामिहायाते सपरिवारेऽपि दशकन्धरे लङ्कायां कल्पान्तघनगर्जितानुकारी कोलाहलः श्रूयते ? । तदिदं विदित्वा सत्वरमिहागच्छ ।

**विहङ्गवेगः**—आदेशः प्रमाणम् । ( इति निष्क्रान्तः । )

**रामः**—( पुरो विलोक्य ) अहो ! विपुलता पौलस्त्यसैन्यस्य ।

**विभीषणः**—देव ! न केवलं विपुलतैव, सङ्ग्रामैकाग्रताऽप्यस्य परिभाव्यताम् । तथा च—केऽपि कौन्तिकाः, केऽपि पारश्वधिकाः, केऽपि नैस्त्रिंशिकाः, केऽपि शाक्तीकाः, केऽपि धानुष्काः, केऽपि हर्म्यधरयारूढाः, केऽपि पदगा यातुधानाः पुरतः सन्नह्यन्ते ।

1 'वृन्दं ते अ' भा० ।

( प्रविश्य )

विद्युद्वेगः—( विभीषणं प्रति ) कुमार ! प्रथमं तावद् दशकन्धरदुरवलेपदलनार्थं तदसिद्धौ च विरोधिनिधनार्थं देव्या मन्दोदर्या प्रबोध्यमाने कुम्भकर्णे कर्णावस्कन्दी स एष कोलाहलः ।

विभीषणः—अथ प्रबुद्धः कुम्भकर्णः ? । किमभिहितं च तेन निरस्तनिद्रेण ? ।

विद्युद्वेगः—कुमार ! प्रबुद्धवता कुम्भकर्णेन प्रबोधकेभ्यः सीतापहारप्रभृति सैन्यसमागमनपर्यन्तं रामरावणयोर्वृत्तान्तमवगम्य सविमर्शमित्यभिदधे राक्षसराजः—

धर्मोऽसौ रक्षसां यत् परधरणिधनाऽगारदाराऽपहारः,

कार्योऽयं शौर्यवृत्त्या, न पुनरुपधिना, सोऽथ चक्रे तथैव ? ।

चिन्त्यं कालानुकूल्यं तदपि न विदधे,

इत्यभिधाय पुनः सानुशयावष्टम्भमात्मानं प्रत्येवमूचे—

को व्यतीते वितर्कः

स्फुरत् तूर्णं कुम्भकर्ण ! व्रज समरधरामुद्धर भ्रातृशल्यम् ॥५२॥

इत्युक्त्वा पराक्रमितुमुपक्रान्तवान् ।

रामः—( सविमर्शम् ) अहो ! नीतिशक्तिसम्पृक्ता कुम्भकर्णस्य भणितिः ।

विभीषणः—देव ! भणितेरनुरूपः सम्प्रहारव्यवहारोऽप्यस्य चिन्तनीयः ।

रामः—किमुच्यते दशकन्धरानुजस्य कुम्भकर्णस्य ? । ( पुरोऽवलोक्य पश्यन् ) सखे विभीषण ! द्वन्द्वयुद्धविधानेनिबद्धबुद्धय इमेते यातुधानसैनिकाः लक्ष्यन्ते तदवबोधयतु मामेतान् ।

विभीषणः—( विलोक्य सप्रत्यभिज्ञम् ) देव !

प्रेतराजस्य सहाव्यापारप्रतिहस्तकः ।

प्रहस्तोऽयमुदस्तोच्चैर्दण्डहस्तो विजृम्भते ॥ ५३ ॥

इतोऽपि—

महोदरं पुरः पश्य दशग्रीवसहोदरम् ।

गिरितुल्यगजारूढमुद्दण्डकार्मुकम् ॥ ५४ ॥

रामः—यावदिमौ नीलेन सह कलहकेलिमनुभवितुमिच्छतः ? ।

---

1 °मारचनपर्यन्तं रामरावणयोः भा० । 2 सविमर्शस्य भा० ।

**विभीषणः**—एवम् । तदनन्तरश्चायम्—

जगराजिनि वाजिनि स्थितस्तरुणाऽहस्करका¹न्तिमिश्रित ।
दिशते दशमङ्गदे मुहुर्विहितातङ्कभरा नरान्तक ॥ ५५ ॥

**रामः**—सखे ! कोऽसौ नैकसेयसेनायामनायासनिनिर्जितत्रिभुवनीराहङ्कार इव पुरतं परिभाव्यते ?।

**विभीषणः**—देव !

रथे स्थितोऽय मृगराजकेतने, निकेतन दु प्रसहस्य तेजस ।
सम सुमित्रातनयेन सङ्गर, समीहते रावणसूनुरिन्द्रजित् ॥ ५६ ॥

**रामः** –य किल मेघनादापरनामा मन्दोदरीनन्दन श्रूयते ?।

**विभीषणः**—अथ किम् ? ।

**रामः**—कतर पुनरय सुरचक्रवर्तिजित समीपवर्ती निरीक्ष्यते ? ।

**विभीषणः**—

लङ्केश्वरादजनि य, स्थितवन्ति यत्र
दिव्यायुधानि च निरञ्चि²परेण धीरे ।
रोमाञ्चकञ्चुकितकायतयाऽतिकाय,
सोऽय समित्यनुकरोति कदम्बपुष्पम् ॥ ५७ ॥

**रामः**—नन्वस्यापि वत्सलक्ष्मणाभिमुख एव कटाक्षनिक्षेप ।

**विहङ्गवेगः**—देव ! समुत्कृष्टतेजसेऽभ्यसूयन्ति खलु मनस्विना मानसानि ।

**विभीषणः**—साधूक्त विहङ्गवेगेन । यदेतेऽपि समकालमहम्प्रथमिकया हनूमन्तमेव हन्तुकामा पुरतोऽवतिष्ठन्ते । ( इति दर्शयति । )

**रामः**—किमभिधाना पुनरमी यातुधाना ? ।

**विभीषणः**—देव ! प्रथमस्तावत्—

बालार्कबिम्बारुणरुक्कान्तिर्दन्तावलस्कन्धमधिष्ठितोऽयम् ।
उदायुध कस्य मन सकम्प, प्रकम्पन सयति नाऽऽतनोति ? ॥ ५८ ॥

अपरश्च—

---

१ °वान्ततस्क° आ० । २ °बिनरेण आ० ।

घोर दधान परिघाभिधानमस्त्र महाशस्त्रभृता कृतान्त ।
देवान्तक सैष नरान्तकस्य, भ्राता प्रयातार्थमिहोज्जिहीते ॥ ५९ ॥

तदन्तिके च —

दशशिरस्तनयस्त्रिशिरा शरासनमय नमयन्नवधार्यताम् ।
प्रधनमूर्द्धनि य प्रदरान् किरन्, गजगतो जगतोऽपि भयङ्कर ॥ ६० ॥

**रामः**—( सासूयम् ) किमेभि प्रभूतैरप्यज्ञाना[1]तनूजस्य ? ।

**विभीषणः**—देव !

खरात्मजोऽय मकराक्षनामा, दिव्यास्त्रयोधी वरसिन्धुरस्थ ।
तत्पैतृक वैरमनुस्मरन् यस्त्वय्येव दुष्टा निदधाति दृष्टिम् ॥ ६१ ॥

**रामः**—( स्मित्वा ) भवतु । बहव खल्वमी तमीचरा । तत्सङ्क्षेपत समाचक्ष्व ।

**विभीषणः**—( सर्वानङ्गुल्या [2]निर्दिशन् ) देव ! सोऽयमृषभेण महापार्श्व, गजेन प्रतपन, जाम्बुवता विरूपाक्ष, शतबलिना विद्युज्जिह्व, [3]बलेन तपन, गन्धमादनेन विद्युन्माली, गवाक्षेण घोराक्ष, गवयेन मायामय, केसरिणा कील्कर्ण, द्विविदेन दीर्घदंष्ट्र, मैन्देन [4]वज्रमुष्टिरिति परस्परमपरैरपरेऽप्यायोधनविधित्सया पुरत सरभन्ते ।

**रामः**—( पुनरवलोक्य ) कश्चासौ गगनमण्डलमण्डपावष्टम्भस्तम्भानुकारी महा राक्षसो दृश्यते ? ।

**विभीषणः**—देव !

लङ्कापुरीपरिभवे सति मय्यपीति,
व्रीडाविवर्णमवलोक्य कुम्भकर्णम् ।
देय यदिष्टमिति वासनया परेषा,
निद्रारतिर्दिशति य किल दीर्घनिद्राम् ॥ ६२ ॥

**रामः**—( कुम्भकर्णं निर्वर्ण्य साश्चर्यम् )

आरोप्यते गिरिशिरस्यथवो गिरिश्चेत्,
तद्वद्वन्द्वमञ्जनजलेन विलिप्यते च ।
अत्युच्चमेचकतनुस्तनुते तदैष,
तत्तुल्यतामवरजो दशकन्धरस्य ॥ ६३ ॥

---

1 [1]तनयस्य मा० । 2 निदर्शयन् मा० । 3 नलेन मा० । 4 वक्रमु० मा० ।

**विभीषणः**—देव ! विलोक्यताम् । स एष त्रिभुवनविजयी लङ्केश्वरः ।

स्मृत्वाऽद्यापि यदीयबाहुपरिघप्रेङ्खोल्लनानामसौ,
कैलासः पवनावधूतविटपिव्रातच्छलाद् वेपते ।
शक्रातिक्रमकृच्च यस्य चरितं गायन्ति नाकाङ्गना,
साकाङ्क्षं समराय राक्षसपतिः सोऽयं पुरः प्रेक्ष्यताम् ॥ ६४ ॥

**रामः**—सखे ! त्रिभुवनाभिभावुकेन तेजसा दशभिः शिरोभिर्विंशत्या भुजैरज्ञापितोऽपि विज्ञायत एवायं निशाचरचक्रवर्ती । (इति रावणं निपुणमन्विष्य पुनः सश्लाघम्) सखे विभीषण ! शृणु समीचीनमस्मदीयं वचः—

उत्पत्तिर्विमले विरिञ्चिनि कुले दुर्वारवीरस्मया-
ऽपस्मारप्रतिकारभेषजभुजोद्भूतप्रतापं वपुः ।
वक्तुं यस्य च साहसं यदि स दिग्वासाः शिरःपूजितो,
जानीते तदयं स्वयं समजनि स्तुत्यः पुलस्त्योद्भवः ॥ ६५ ॥

अपरं च—

देशे देशे ककुभि ककुभि क्ष्माधरे क्ष्माधरे च,
ग्रामे ग्रामे पुरि पुरि चिरं यस्य जागर्ति कीर्तिः ।
दृष्टः स्वामी स पिशितभुजां वयसो हन्त ! मद्य,
दृष्टेनैव तदिदं विहरेचक्षुरक्षुद्रमेव ॥ ६६ ॥

**विभीषणः**—देव ! न सर्वकालं सदृशान्येव शरीरभाजां भागधेयानि भवन्ति ।

**रामः**—(तुमुलमाकर्ण्यावलोक्य च) कथमेभिर्वानररजनीचरैरन्योन्यमुपक्रान्तेव रणप्रकरणप्रस्तावना । तथाहि—

उद्गर्जन्तूर्यरवैरुपचितरोमराजयः,
दारयन्ति त इमे समराय राक्षसाः ।
लङ्कापुरीपरिसरे भ्रमन्ति सत्वरं,
शाखामृगाश्च मृगराजसमानविक्रमाः ॥ ६७ ॥

---

1 पिशिताशन° भा० । 2 °वरोपित° भा० ।

सखे निभीषण! तदिदानीं प्रत्युत्थानीय एवायं समरातिथिर्निशीथिनीचरनाथ। ([1]इत्यभिधाय सर्वे निष्क्रान्ता।)

॥ इति षष्ठोऽङ्कः समाप्तः ॥

---

जीमूतवाहनेन च[2] शैलेनेन च समुन्नतिं दधत।
स्यादश्वराजसूनोरहिमवता हिमवता समता ॥ ६८ ॥

---

1 इत्युपाय सर्वे मा०। 2 च शैलेन समं समु' मा०।

# सप्तमोऽङ्कः ।

(ततः प्रविशति [1]चारपुरुषः ।)

**[2]चारपुरुषः**—समादिष्टोऽस्मि मथुराधिनाथेन महाराजलवणेन रामरावणयो रणवृत्तान्तपरिज्ञानार्थं लङ्कागमनाय । यदसौ प्रियसुहृद् दशकन्धरमनुरुध्यमानो मान्धातृवधविरोधितेषु रघुवंशसम्भवभूपालेषु विशेषतो वैरायते । तदिदानीमस्मत्प्रभुः प्रहस्तधूम्राक्षमहोदरप्रभृतिप्रधानयातुधानवधादुत्कोपण रामपक्षमाकर्ण्य विवर्णवदनः किञ्चित् कुम्भकर्णपराक्रमस्मरणेन समाश्वास्यमानमानसो नियते ।

क्षिप्ता कक्षाभ्यन्तरे वानरेन्द्रः, लङ्कामध्ये कुम्भकर्णः प्रविष्टः ।
तेनोदन्तेनामृतेनेव सिक्तः स्वामिस्वान्तः शान्तसन्तापमास्ते ॥ १ ॥

(इति परिक्रामन् पुनः सविमर्शम्) सुस्तुतरं च तेनैतदनुष्ठितं वीरवरिष्ठेन वज्रज्वालानलभेन । यतः—

वालिविरचितं कक्षानिक्षेपं रावणस्य संस्मृत्य ।
तदवरजं तदवरजः क्रुधा न्यधत्त तं स किल ॥ २ ॥

(पुरो विलोक्य च) सोऽयं लङ्कापुरीपरिसरः । तदिह बृहच्चरविक्रमनिधानवानरयातुधानप्रधानसमाकुलितसकललोके स्वामिना लवणेन कुम्भकर्णस्य प्रवृत्तिपरिज्ञानार्थं प्रथमप्रहितं वृकमुखं काऽपि शब्दयामि । (इति तथा करोति ।)

(प्रविश्य)

**वृकमुखः**—(पुरः पश्यन्) अये ! स एष प्रियसखः कार्पटिकः । वयस्य ! किमिति मामुद्दिश्य शब्दायसे ?

**कार्पटिकः**—कथं निर्यासि ? इति ।

**वृकमुखः**—कथनपरिज्ञातगमनप्रयोजनार्थं स्वामिनमुपतिष्ठामि ।

**कार्पटिकः**—तन्निवेदय मुद्गरप्रहारमूर्च्छितं सुग्रीवमादाय लङ्कान्तः प्रविष्टस्य कुम्भकर्णस्य वृत्तान्तम् ।

---

1 2 चर° पा० ।

**वृकमुखः**—(सोद्वेगम्) सखे ! किं पृष्टेन कथितेन वा दुर्दैवविफलीकृतपराक्रमोपक्रमाणामुदन्तेन [1]। तथापि यथावृत्तान्तं कथयामि—ततः सङ्कटितचेतसि स प्लवङ्गमपुङ्गवः सकलपौरजनस्तवनामृतसपूर्यमाणकर्णस्य कुम्भकर्णस्य कर्णनासिकाविनाशं विधाय सत्वरमुत्प्लवमानः पुनरेव रामनिकटं जगाम।

**कार्पटिकः**—ततस्ततः ?।

**वृकमुखः**—अथासावपि तथैव व्यावृत्य

व्यङ्गत्वं गमितः प्लवङ्गपतिना लङ्काधिराजानुजः,
क्षीणो राघवमार्गणव्रणगलद्रक्तासवेनाऽसनः।
कीशांश्च क्षणदाचरांश्च गणशः कुर्वन्नुपान्तस्थितान्,
काकुत्स्थं प्रसितुं प्रसारितमुखः सख्ये सरोषोऽभ्यगात् ॥ ३ ॥

**कार्पटिकः**—(सश्लाघम्) अहो ! दर्पकोपातिशयः कोऽपि कुम्भकर्णस्य। ततस्ततः ?।

**वृकमुखः**—ततश्च।

यावन्न राघवमसौ ग्रसते सशङ्कं
स्तन्मूर्ध्नि मोक्तुममरैः प्रगुणीकृतो यः।
पुष्पाञ्जलिस्तदनु सद्यस्तकुम्भकर्णे,
काकुत्स्थ एव मुदितैर्मुमुचे स तावत् ॥ ४ ॥

**कार्पटिकः**—(सखेदम्) हा त्रिभुवनैकसुभट कुम्भकर्ण ! भवदवसानमाकर्ण्य सोऽसत्त्वाऽमी महाराजरावणो रावणाभ्युदयविषये निराशीभविष्यति। निश्चितं महाराजरावणोऽधुना—

सीतां रामं कुम्भकर्णं च शङ्के,
लङ्केशानः संस्मरत्येककालम्।
चित्ते कामक्रोधशोकानलाना-
मन्यां त्रेतामादधे स्मात्महव्यम् ॥ ५ ॥

ततस्ततः ?।

---

1 'स्मसान्। कीनाशान् क्षण' मा०। 2 एव मुमुचे मुदितैः स मा०। 3 'भी लवणमहाराजो रावं' मा०। 4 'वणोऽपि सम्प्रति—सीतां मा०।

**धूकमुखः**—ततश्च कुम्भकर्णवधामर्षितः शक्रजिदभिचारहोमेन दिव्यमजेयं रथमुत्पादयितुकामो निकुम्भि'लां प्रति प्रतिष्ठमानोऽर्द्धपथ एव लक्ष्मणेन धनुर्ज्यारावराजाज्ञया प्रतिषिद्धः ।

**कार्पटिकः**—ततस्ततः [1] ।

**धूकमुखः**—ततश्च स मन्दोदरीनन्दनः कोपकम्पिताधरोष्ठपल्लवो लक्ष्मणसमीपे विभीषणमवलोक्य नियतमेतदस्मदीयं रहस्यमिदमावेदितमनेनेति तावुभावपि प्रति अभियोद्धुमारेभे—

त्वं मे तात इवासि तत् कथमिदं शत्रोः पुरः प्रोक्तवा-
नस्मन्मर्म ? न धर्म एष महतां किं प्रश्रयेणाथवा ? ।
आः ! तिष्ठेति विभीषणे च परुषां वाचं विमुञ्चन्नसौ,
बाणालीमितरत्र च प्रणिहितः सौमित्रिणा रावणिः ॥ ६ ॥

**कार्पटिकः**—(सखेदम्) सखे ! तदेतदपि प्रत्यर्थिमथनैकमनोरथस्थानमात्मनो दुर्दैवेन भग्नमवगम्य किमनुष्ठितं दशकन्धरेण ? ।

**धूकमुखः**—तेन च प्रियपुत्रविपत्तिवार्ताविरचितमूर्च्छावसाने भूयस्तरामिति निवेदितम्—

वत्स ! त्वयाऽस्मि विजयी द्विभुजैकमूर्त्ता,
मौलीन् वहन्नपि दश द्विगुणांश्च बाहून् ।
तत् किं प्रयातकुतुकावसरं विहाय,
निद्रां भवाननुभवत्यपुनःप्रबोधाम् ? ॥ ७ ॥

**कार्पटिकः**—ततस्ततः ? ।

**धूकमुखः**—तदनन्तरमुद्वेलशौर्यसागरात्ययावाहितशैवलिनीप्रवाहो बहुतराणि वानरनिकुरम्बकाणि संहरन्नुत्त्रासयंश्च गणयश्च रणाङ्गणप्रणयिनं लक्ष्मणं शक्तिप्रहारविदारितवक्षःस्थलं क्षितिमण्डले निक्षिप्य राक्षसाधिपतिर्जितकाशी पुनरेव निजनगरीं प्राविक्षत् ।

**कार्पटिकः**—ततस्ततः ? ।

**धूकमुखः**—ततश्च 'जितं जितम्' इति सानन्देषु क्रव्यादवृन्देषु 'हा ! धिक् कष्टम्' इति सशोकेषु वैमानिकलोकेषु 'भग्नं भग्नम्' इति सञ्जातदरेषु वानरनिकरेषु व्याहरत्सु—

---

1 °लां प्रविश्यमानोऽर्धपथे मृत एव दे० । 2 °वमाली° भा० ।

तदेतदीयमार्गमवलोकयामि। (इति निष्क्रान्तः।)

**रामः**—(लक्ष्मणं निरीक्ष्य सनिश्वासं सुग्रीवं प्रति) वयस्य किष्किन्धाधिपते!

अमुना सह बन्धुनाऽधुना, विरतोऽस्मि न हि सर्वथा व्यथा।
न मया नृपतिर्विभीषणः, कृत इत्येतदरुन्तुदं तु मे॥ १५॥

**विभीषणः**—(रामं प्रति)

विश्वालङ्कार! किं लङ्काराज्यसिंहासनेन मे?।
यदुन्नततरे प्राज्ञ तव चित्तासने स्थितिः॥ १६॥

**सुग्रीवः**—(रामं प्रति)

हे प्रतीक्ष! प्रतीक्षस्व मारुतेरागतिं ततः।
जीवितं लक्ष्मणे सीता त्वयि लङ्का विभीषणे॥ १७॥

**रामः**—(दीर्घमुष्णं च निश्वस्य) सखे शाखामृगेश्वर! दुर्लभा सम्प्रति विदेहराजात्मजा। (इत्यधोमुखस्तिष्ठति।)

**सुग्रीवः**—(सावष्टम्भम्) पृथग्जन इव धीरतामपरीकरोषि—

किष्किन्धां व्रज निजबान्धवेन सार्द्धं,
चिन्तावान् किमसि? पुरं हि तत् तवैव।
हत्वाऽरिं यदि न ददामि देव! तुभ्यं,
वैदेहीं तदहमहर्पतेर्न पुत्रः॥ १८॥

(नेपथ्ये)

भो भोः प्लवङ्गमनराः! प्रमोदध्वं प्रमोदध्वम्, यदायातः कृतकार्योऽयमञ्जनाशुक्तिमौक्तिकं संसारसागरोत्तरणमहायोगी रघुकुलकल्पतरुसहकारं मारुतिः। तदिदानीम्—

सीतापतिर्विजयतां धर्मरुजामूर्मिगणनिमन्थनस्तु।
सरमापतिश्च नन्दतु रमापतिर्जयतु नामकृत्॥ १९॥

(इति श्रुत्वा सर्वेऽपि हर्षं नाटयन्ति।)

**रामः**—(सानन्दम्) कथमनर्थमाम्बरानाञ्जनेयागमननिवेदनामृतेन पुनरस्मानुज्जीवयति!। (इति वाचयित्वा) सखे! किमेतावदेवात्र लिखितम्? (इति पत्रमर्पयति।)

**वृकमुखः**—( पट्टं गृहीत्वा ) वयस्य ! अत परमतिहृदयोद्वेगजनकमिति न लिखितम् ।

**कार्पटिकः**—( सविमर्शम् ) नूनमञ्जनातनयेनोज्जीवित सुमित्रासुत । तदनन्तर च किमभूत् ? ।

**वृकमुखः**—

[ ,

] वर्त्यौरुष व्याहरन् ।

यत् तस्याप्यरतिप्रद न च मदस्पर्शेन यद् दूष्यते,

तेजस्तद् दधदिङ्गितैरनुमित रामस्य रङ्गे स्थित ॥ २० ॥

**कार्पटिकः**—ततस्तत ? ।

**वृकमुखः**—ततश्च कृतपर्यङ्कबन्ध पक्षद्वयोपविष्टेषु वानरराक्षससुभटेषु, समराव लोकनकुतूहलोत्तानितलोचनेषु वैमानिकजनेषु, 'किं भविष्यति ?' इत्याकुलस्विन्नभालेषु दिक्पालेषु, स्वस्त्ययनसूक्तजपनिपुणे देवमुनिगणे, मन्दीकृतस्पन्दनप्रसरे भगवति भास्करे, दुर्विनीतनिजप्रपौत्रवधप्रतिविधातरि देवे विधातरि, शिथिलितसमाधिमुद्रे स्वामिनि रुद्रे च, परस्परमेकसुरभिसम्भोगाभिलाषयोरिव वृषभयोरिव, एकानोकहच्छायाश्रयणगजयोर्मत्तमतङ्गजयोरिव, एकगुहासद्मग्रहणबद्धाग्रहयोर्दृप्तसिंहयोरिव रामरावणयोरेकस्त्रीकारणा रणप्रवृत्तिरासीत् ।

**कार्पटिकः**—सखे ! धन्योऽसि येन तव तादृश समरकौतूहलमवलोकितम् । ततस्तत ? ।

**वृकमुखः**—ततश्च

हुङ्कारे प्रतिपर्वतप्रतिरवस्फारैर्दशाना दिशा

माशङ्कातिशय दिशन् दशमुख क्रोधेन रज्यन्मुख ।

राम वामकरावलम्बितधनुर्मौर्वीगुणार्पण

क्रीडद्दक्षिणपाणिपद्ममभिनन्निश्छद्मशूर शरैः ॥ २१ ॥

**कार्पटिकः**—ततस्तत ? ।

**वृकमुखः**—ततश्च—

पश्चात्पतत्सु निशिताहतिभि शिरस्सु,

दर्पोदयेन तु पदेषु पुर सरत्सु ।

---

१ 'तुर्दण्डदण्डक' द० ।

निर्व्याजविक्रमनमस्यनमस्य तस्य,
रामश्चकार निधन प्रधनाभिगम ॥ २२ ॥

**कार्पटिकः**—(श्रुत्वा सखेदम्) हा लोकत्रयैकवीर! हा रणाङ्गणावगणितसुनासीर! हा विजयलक्ष्मीविलासावास! हा दिग्दन्तिदन्तदलनोज्ज्वलीकृतचन्द्रहास! हा निरहङ्कारीकृतसकलनिर्जरसमाज! हा लङ्काधिराज[1]! तवापि मनुष्यकृतमवसान श्रूयते[2]। (इति शोचति।)

**वृकमुखः**—सखे! यथार्थ[3]थाऽपि मरणधर्मिणि मर्त्यलोके किमयमेवमनवद्यविक्रम शोच्यते? यस्य[4] तदानीमपि—

तद् दूरेऽस्तु यदस्य राक्षसपतेर्गीश्चेदमत्यद्भुत,
युद्ध वज्रधर पराजयमथो तत्याज लज्जा निजाम्।
दृष्ट्वा यस्य च [5]दुर्दमस्य दलन सोऽपि त्रिलोकीभट-
श्रेणीमौलिमणिर्घुणाक्षरमम मेने रघूणा पति ॥ २३ ॥

**कार्पटिकः**—भवतु। ततस्तत[6]।

**वृकमुखः**—ततश्च तथाविपन्नस्य[7] राक्षसपतेरग्निसंस्कार प्रति मन्दायमान विभीषण दाशरथिरित्यवादीत्—सखे! न खलु कुलाचार परिहर्तव्य। तदस्य ज्येष्ठभ्रातुर्दशकण्ठस्य समयसदृशमनुष्ठीयताम्। यत —

प्राणापहारान्तमुशन्ति वैर, निर्वर्तित तत्सुहृदा त्वयेद।
तत्साम्प्रत ते स यथा तथा मे, कालोचित तत् क्रियता तदस्य ॥ २४ ॥

(अथ विहितराव[णा]द् वैदेहिकेन विभीषणेन हनूमता च रामाज्ञया प्रसाधितशरीरा सीता तत्समीपमानीता।)

**कार्पटिकः**—ततस्तत ?।

**वृकमुखः**—ततश्च—

दृष्ट्वा चिराद् उषितमत्तसमस्तलोका,
मत्वाऽन्यथा तमथ भीतिमती च सीता।
स्वैनव राक्षसगृहस्थितिदोषशङ्का
शान्त्यर्थमर्थयति वह्निनिवेशदिव्यम् ॥ २५ ॥

---

1 °व। हा रावण त° दे०। 2 °था वा म° भा०। 3° स्य दृष्टा° द०। 4 दुर्मदस्य भा०। 5 °स्य यातुधानाधिप°भा०। 6 °ष्टस्य भ्रा भा०। 7 °णस्यौर्ध्व° भा०।

तदनन्तरं रामभ्रूसं[1]ज्ञाप्रेरिते प्लवगवृन्दैरानीयमानेषु दारुनिकरेषु भगवदाह्वानमाकर्ण्य सोऽग्निरिहाऽऽयातवान् ।

( नेपथ्ये )

भो भोस्त्रिभुवननिवासिनः पुरुषाः ! सेयं रत्नावती अन्[2]तःकरणात्मना लक्ष्मणमुखेनेदमभि[3]धत्ते—

मातर्मेदिनि ! देव दीधितिपते ! सर्वेऽप्यधीशा ! दिशाम्,
एषा विज्ञपयामि च शृणुत हे विज्ञा ! प्रतिज्ञामिमाम् ।
कौशल्यासुतमन्तरेण मम यद्यन्योऽपि कश्चित् पुमान्
चित्ते कर्मणि वाचि वाऽस्ति तदयं वह्निर्दहत्वाशु माम् ॥ २६ ॥

**घूकमुखः**—( श्रुत्वा ) कदाचिदियं प्रविशति हुताशने सीता ।

**कार्पटिकः**—( नेपथ्याभिमुखं दर्शयन् ) ननु प्रविष्टैव । तथाहि—

हाकारगर्भितमुखेषु वलीमुखेषु
वैमानिकेषु नयनोदकमुत्सृजत्सु ।
व्योमाङ्गणाक्रमणकौतुकदत्तफालं,
ज्वालाकलापमवलोकय पावकस्य ॥ २७ ॥

**घूकमुखः**—अतिहिंसारणमिदमाचरितं रामभद्रेण । ( पुनराकाशे )

दिष्ट्या मुञ्चत पुष्पवृष्टिममराः प्रस्तावश्चायं , 
प्रीतिं पुष्यतु दिव्यदुन्दुभिरवस्तूर्णं च कर्णद्वये ।
पुष्पाणामपि ताडनं न सहते मृद्वी यदीया तनुः
वैदेही द[4]हनेऽपि साऽद्य निहिता शुद्धा न दग्धा यतः ॥ २८ ॥

अपरं च—

श्लाघ्यः स राघवगुरुः प्रभवः यस्य,
न न्यायनिष्ठुरतरे हृदि पुष्पचापः ।
वन्द्या च सा जनकभूपतिवंश-
भीतिं निधाय निजशीलबलेन याऽस्मौ ॥ २९ ॥

---

1 °सञ्ज्ञया प्रे° भा० । 2 °नकमसा र° भा० । 3 °भिधे मात° भा० । 4 दहन प्रावेशे निरगाच्छुद्धा भा० ।

**कार्पटिकः**—(श्रुत्वा) सखे ! [1]शुद्धेव तावदवनिसुतेयम् । तदिदानीं किमपरेण [2] । गच्छतु भवान् मथुरायाम् । अहं पुनरग्निविशुद्धां वैदेहीमवलोकयि[3]ष्यामि । (इति परिक्रामति ।)

(वृद्धमुख्यो निष्क्रान्तः ।)

(ततः प्रविशति कृतनीराजिका चरणाङ्गुष्ठनिविष्टदृष्टिं सीतामुत्सङ्गे वहन् वैश्वानरो विभीषणसुग्रीवसहितौ रामलक्ष्मणौ हनुमांश्च ।)

**वैश्वानरः**—(रामं प्रति)

इयं मूर्त्यन्तरेण श्रीरियं तीर्थं हि [4]जङ्गमम् ।
भूयोऽपि वत्स ! वैदेहीं देहार्द्धं तदिमां कुरु ॥ ३० ॥

(इति सीतामर्पयति ।)

**रामः**—(सप्रमोदप्रश्रयमञ्जलिं बद्ध्वा मौलिकमले विनिवेशयन्) यदादिष्टं निष्टपैक गुरुणा तत् तथा समर्थितमेव ।

(सर्वेऽपि रामसमीपस्थिता सीतामवलोक्य हर्षं नाटयन्ति ।)

**कार्पटिकः**—(सीतां निर्वर्ण्य) अहो ! काऽपि कमनीयता विदेहदुहितुः । तथाहि—

मन्ये महानन्दपदं तदेतन्नितम्बनिम्नं शशिबिम्बमुख्याः ।
यस्मिन्ननभ्याय तथाहि सुभ्रुर्नेत्रे पुनर्नाऽऽवृते नराणाम् ॥ ३१ ॥

(पुनः सेर्ष्यम्) तदहमयोध्यामपि गत्वा निजनायकाभिप्रायवेदी यथा तथा वा दाशरथीनामपकर्तुं प्रयतिष्ये । (इति निष्क्रान्तः ।)

**हनूमान्**—(सीतामुद्दिश्य दैवं प्रति सोपालम्भम्)

[5]यस्याः सच्चरितं त्रयेऽपि जगता जागर्ति भव्याऽयम
प्यस्थानस्खलिनाभिशङ्किहृदयः प्रत्येति या सर्वदा ।
साक्षात् साक्षिणि मय्यशोषयनिराकृचान्तरिक्षे स्थिते,
साऽप्यस्मावितराङ्गनेव निदधे दुर्वेधसा शुद्धये ॥ ३२ ॥

**सुग्रीवः**—अयि पवननन्दन ! स्थाने भवान् दैवमुपालब्धवानसि ।

(आकाशे)

---

1 शुद्धा तावदवनिसुता । स° मा० । 2 °मपरेण किमु° मा० । 3 °कयिष्यामि मा० । 4 जीवनम् मा० । 5 यस्याः स० द० ।

वत्स दशकन्धरवधोन्मूलितत्रिलोकीहृदयशल्य ! कौशल्यासरसीसरोरुह ! यदिदं वत्सायाः विदेहदुहितुः सच्चरितं त्रिभुवनाभ्यन्तरवर्तिना धूमध्वजेनाभिहितं तत् [1]तथैव मन्यताम्।

( सर्वे श्रुत्वा सविस्मयमालोकयन्ति । )

**रामः**—कथमयं भगवान् [2]ऋभुचक्रवर्ती सङ्क्रन्दनो मदनुग्रहाय तातदशरथेन समं द्वित्राभिश्चामरहस्ताभिरप्सरोभिर्वीज्यमानो विमानस्थित इत एवाभिवर्तते [3]।

( ततः प्रविशति यथानिर्दिष्टो वासवो राजा दशरथश्च । )

**रामः**—( वासवं प्रति सप्रश्रयम् ) [4]देवदेवाधिदेव ! पौलोमीपते ! दशरथसूनुरयं रामभद्रोऽभिवादयति । ( इति वासवं प्रणम्य दशरथं प्रणमति । )

☞ [5]( सर्वे वासवं प्रणमन्ति । )

( सीता उभौ प्रणम्य लज्जावती रामान्तरिता तिष्ठति । )

**दशरथः**—( रामं प्रति ) ←

एषा वधूर्वत्स ! कलङ्कपङ्कं, नवेन्दुलेखेव न जातु धत्ते ।
शक्रप्रसादाच्च भविष्यतीयमपत्यमुक्ताफलताम्रपर्णी ॥ ३३ ॥

**रामः**—( सहर्षम् ) महान् प्रसादः । ( इति शिरस्य[6]ञ्जलिमारोपयति । )

**वासवः**—( रामं प्रति ) वत्स दाशरथे ! श्रूयतामपरमपि एतस्याः क्षितिदुहितुर्विषमतरमवस्थान्तरम्—

भवद्भीता सीता[7] द्रुतमविशदग्नावथ परं,
पुमान् सम्पृष्टोऽसाविति चकितचित्ता भृशमभूत् ।
त्यज त्रासं वत्से ! गुरुरिव तदा[8]य च भगवा
निति व्याहावाक्यात् पुनरभव[9]दाश्वस्तहृदया ॥ ३४ ॥

अपरमप्याकर्णय व्याहरणकारणम् ।

**रामः**—( सप्रश्रयम् ) समादिशतु देवः ।

**वासवः**—रघुकुलतिलक !

---

1 तथैव मं° भा० । 2 °ऋभुवरा° भा० । 3 °न् त्रिभुवनवर° भा० । 4 देवाधिदेव ! दे० । 5 इतश्चिह्ना तर्गतोऽयं पाठः दे० नास्ति । 6 °भास्मर्पयति भा० । 7 °ता द्रुत° दे० । 8 °दाऽऽयाहि भ° भा० । 9 °दास्वरघट° दे० ।

वैदेहेन ममाभिसन्धिनपुनर्दत्त्वग्रहेणाऽऽग्रहं ,
सर्वस्वेन निरस्त आत्मदुहितुः स्नेहानुबन्धं विना ।
तामात्मीयकृतां पिशाचपतिना जातोऽस्मि जीवन्मृतः ,
श्रुत्वाऽग्नौ निहितां सतीमपि तनुं प्राणानसौ हास्यति ॥ ३५ ॥

**वैश्वानरः**—( रामं प्रति ) वत्स राम ! श्रुतं यदादिष्टं त्रिविष्टपाधिपेन[1] । तद-विलम्बितमेव कोऽपि विपुलमतिस्त्वरितगतिश्च मिथिलाधिनाथप्रतिबोधनाय प्रेष्यताम् ।

**सीता**—( श्रुत्वा मन्दाक्षरम् ) हा ताद ! अज्ज वि अहं ज्जेव जीविदसंदेहदाइणी संवुत्त म्हि[1] । ( इति रुदन्ती हनुमन्मुखमवलोकयति । )

**हनूमान्**—( सीताभिप्रायमवगम्य ) देवि ! कृतमनिर्वृत्या । द्रुततरमहमेव गत्वा जनकमहाराजमानन्दयिष्यामि । ( इति निष्क्रान्तः । )

**लक्ष्मणः**—( हनूमन्तं गच्छन्तमवलोक्य मनसि प्रकम्पमानाङ्गे )

मन्ये रामाय निमाय सख्ये ! कष्टगतं त्वया ।
अनुशय्य कृतोऽद्य तत्प्रतिकाराय मारुतिः ॥ ३६ ॥

**वासवः**—वत्स रामभद्र ! तदेतदप्यस्तु—

ये वानराः समिति तावकीनाः, कीनाशनेत्रातिथयो बभूवुः ।
जीवन्तु ते रोगगणविमुक्ताः, युक्ताः श्रिया सन्तु च मत्प्रसादात् ॥ ३७ ॥

( इत्यभिधाय दशरथेन सह तिरोदधे । )

**रामः**—( विलोक्य ) कथमयमस्माकं मनोरथादप्यधिकतरं प्रसादफलमारोपयन्प्रत्यक्ष-संवृत्तो भगवान् सहस्राक्षः[2] ।

**वैश्वानरः**—( रामं प्रति )

रावणनिनाशाद् दिक्पतीनां स्थानां,
दशरथसुत ! चक्रे दुर्दशान्तस्त्वया तत् ।
दशशतकरचक्षुः श्रीप्रदानाभिषक्ते,
दश तु भुजभुजङ्ग सङ्गरस्थानरातीन् ॥ ३८ ॥

( इत्युक्त्वा निष्क्रान्तः । )

---

१ हा तात ! अद्यापि अहमेव जीवितसंदेहदायिनी संवृत्ताऽस्मि[2] ।

1 °नार्थं प्र भा० । 2 °रोषक भा० ।

**विभीषणः**—(नेपथ्याभिमुखमवलोक्य) कथमयमवन्ध्यनामा वृद्धामात्यः सत्वर-मिहागच्छति ? ।

(ततः प्रविशत्यवन्ध्यः ।)

**अवन्ध्यः**—(रामं प्रणम्य सविनयम्) देव ! विज्ञपयन्ति प्रकृतिपुरुषाः—प्रगुणी-कृता खल्वसौ लङ्काधिराज्यसिंहासनाध्यासनसामग्री, तदनुजानातु देवः कुमारविभीषण-मभिषेकग्रहणाय ।

**रामः**—(विभीषणं प्रति) सखे ! सफलीक्रियतामियं कुलपुरुषप्रार्थना।

**विभीषणः**—(पाणी सम्पुटीकृत्य) स तावदतिवाहितो दशरथादिष्टो वनवास-व्रतावधिः । तदिदानीमेवैव तत्रभवति देवे स्वीकृते साकेतसाम्राज्याभिषेके पश्चान्ममापि लङ्काधिपत्यप्रतिष्ठा समुचिता भवति ।

**रामः**—सखे राक्षसराज ! नेदमयुक्तम् । तथापि पश्यतु भवान्—

धत्तेऽधुनाऽपि भरतः पटलं जटानाम्

अश्रुच्छटाकलुषितनेत्रपुटश्च सन्ति च ।

नास्मद्गुरुश्च मुनिरत्र तदेष पात्रम्,

राज्यश्रियः प्रथमतोऽपि कथं भवामि ? ॥ ३९ ॥

**विभीषणः**—देव ! तर्हि कपीश्वरसुग्रीवकुमारलक्ष्मणयोर्मया सह लङ्कागमनानु-ज्ञाप्रसादोऽस्तु । अपरेऽप्यङ्गदजाम्बवत्प्रभृतयो वनभवनमुख्या मदीयसत्कारग्रहणार्थं समा-दिश्यताम् ।

**रामः**—भवत्वेवम् ।

**सुग्रीवः**—(रामं प्रति) देव ! लङ्केश्वरसत्कारग्रहणादनन्तरं सर्वेषामपि वानराच्छ-भल्लकानां निजनिजदेशं प्रति प्रस्थापनादेशो भवतु ।

**रामः**—(क्षणं विचिन्त्य) सखे सुग्रीव सूर्यसम्भव ! ते खलु स्वस्थानगमनोत्सुका-श्चास्माकं मद्वचनेनैव सम्भाव्याः—

युष्माभिर्यदुपकृतं न तस्य पश्यामि निष्क्रयं क्वापि ।

तदहो वानरवीराः ! बहुमन्तव्यो मम स्नेहः ॥ ४० ॥

**सुग्रीवः**—यदादिशति देवः । (इति रामानुमतलक्ष्मणसुग्रीवाभ्यां सह विभीषणो निष्क्रान्तः ।)

---

1 दशोद्वाकृतिसाश्रा° भा० । 2 °गमानु° भा० ।

**रामः**—( सीतां करे गृहीत्वा ) प्रिये ! मयैवं दुर्विकल्पवता भृशं क्लेशिता भवती।

**सीता**—ण हु अज्जउत्तेणं, अत्तणो दिव्वेण। ( इति रोदिति। )

**रामः**—( सीतानाश्रुमुन्मृज्य )

विप्रयोगेण शुष्काऽपि स्नेहेनोपचिताऽपि मे ।
नोपशुष्येन दग्धाऽसि भृशं मन्मूयया प्रिये ! ॥ ४१ ॥

अपि च—

म्लानं प्रिये ! माल्यमपि त्वदीयं, न वह्नितापेन सुदुःसहेन ।
पतिव्रतामप्यवजानतस्ता, मनोऽनुतापेन तु तप्यते मे ॥ ४२ ॥

**सीता**—( संस्तुतमाश्लिष्य )

निष्कारणं विरागिणा त्रिमियं मयेति,
मा भूर्विषादभवनं सुरनेकवीर ! ।
दैवेन केनचिदहं दहने यदस्ता,
निस्तारिता तु भवतैव हृदि स्थितेन ॥ ४३ ॥

**रामः**—देवि ! सदृशमिदं क्षमामभवतस्य । [2]अपि च—

अप्येकं दधदानन्दं भवत्संयोगसम्भवम् ।
अद्य वेद्मि स्वमुत्कृष्टं शतानन्दादपि प्रिये ! ॥ ४४ ॥

( नेपथ्ये )

देव दिवाकरकुलैकललाम राम ! तदिदं पुष्पकाभिधानं विमानमधिरुह्यतामयोध्यागमनाय।

**रामः**—( श्रुत्वा ) कथमसौ विभीषणो व्याहरति ? । देवि ! तदेनमभिनवभूपालमभ्युत्थानेन सम्भावयामि ।

( इति निष्क्रान्ताः सर्वे )

**॥ इति सप्तमोऽङ्कः समाप्तः ॥**

धा[3]त्री प्रभूतधान्या यद्यपि वसुमानसौ च सविताऽस्ति ।
पालयति वस्तुपाल प्रजा क्षुधा बाधितास्तदपि ॥ ४५ ॥

---

१ न खलु आर्यपुत्रेण. आत्मनो दैवेन ।

---

1 °ण युक्ताऽपि दे० । 2 अपरं च मा० । 3 दे० आदर्श नास्त्ययं श्लोकः ।

# अष्टमोऽङ्कः ।

( नेपथ्ये )

जयतु जयतु रामः क्षेमकृद् विष्टपाना-
मनिशमयमभीष्टां लक्ष्मणोऽप्येतु लक्ष्मीम् ।
भवतु च भुवि सीता स्फीतकीर्तिः, शुभाना
भवनमपि कपीन्द्रः कोणपेन्द्रश्च भूयात् ॥ १ ॥

देव दाशरथे ! सोऽयं दिव्यचारणगणस्त्वदीयदर्शनेन कृतार्थीकृतः सम्प्रति निजनिजस्थानगमनाय भवन्तमापृच्छते । यतः —

लोचनेन तव चारुपक्ष्मणा, लक्ष्मणाग्रज ! निरीक्षितोऽद्य यः ।
सम्मदेन महता स्वमुत्तमं, मन्यते स्म गतमन्युतोऽपि सः ॥ २ ॥

( ततः प्रविशति विमानस्थितो रामः सीतालक्ष्मणविभीषणसुग्रीवाश्च । )

**विभीषणः**—( पुष्पकं प्रति )

हे विमान ! परमानमपि त्वं, बहुता गमयदात्मजनेन ।
भास्कराभिजनसम्भवभूपायत्तपत्तनसमीपमुपेहि ॥ ३ ॥

( इति सर्वे विमानोद्गतिं नाटयन्ति । )

**रामः**—देवि ! जनकराजात्मजे !

विमानं व्योमाग्रे व्रजति निजमाणिक्यनिकर-
प्रभापातप्रद्योतनकरसुराभूनमिव ।
इतस्था पश्यामः सुमुखि ! नगल्यानुत्तुङ्गगणान्,
गिरीन् मुष्टिग्राह्यान्, प्रतनिम्नगमियाश्च जलधीन् ॥ ४ ॥

( उपविश्य नीरयन् च ) अमूनि नितान्तनामस्तन भगवन्मुद्राभिनत्रिभुवनलोकमुपशोभमानि । ( अञ्जलिं बद्ध्वा )

१ विश्वमानाना° भा० । २ सार्वभौमानुचरित° दे० । ३ °त्रुटित भा० ।

पुष्णातु प्रमद प्रभु म भवतामुष्णद्युतिर्यत्कृपा-

दस्वातामृतसागरप्रणयिनि क्ष्मालोकलीलानने ।

आविर्भूतनखाङ्गुलीस्खलया सुच्छायता निश्चत,

शोभन्ते मनुजद्रुमा द्रुततर रोगाग्निरुग्णा अपि ॥ ५ ॥

**सीता**—( सूर्यं प्रणम्य राम प्रति ) अज्जउत्त ! कहिं स वाणररक्खसाण पाणावसाणत्रो संगरो सवुत्तो ? ।

**रामः**—( अङ्गुल्या निर्दर्शयन् )

तामेता विद्धि युद्धावनिमवनिसुते ! यत्र नक्तञ्चराणा

मक्षीणे शोणितौघैरयमननि महानर्णव स्पष्टमब्धि ।

यन्मध्ये स्वल्पमध्ये ! कपिकुलदलितानन्तदन्तीन्द्रदम्भा

उत्तम्भारातेर्भयेन स्थित इव निरद सर्वत पर्वतानाम् ॥ ६ ॥

**लक्ष्मणः**—( सीता प्रति ) देवि दशरथस्नुषे ! परिभाव्यतामित —

दुर्जीर्णितगतवानररिक्ताद्धोऽय समिन्महीमूर्द्धा ।

कचमेचकमृतराक्षसखचिताद्धो भाति सपलितिरिव ॥ ७ ॥

( सीता दृष्ट्वा स्मयते )

**सुग्रीवः**—( राम प्रति ) स्मरति देवो यदत्र तेऽनुगातमभिराचरितम् ? ।

**रामः**—सखे ! कृतममुना वृत्तान्तेन ।

**सीता**—अज्जउत्त ! केण कारणेण एस वाणरेसरो जपतो णिवारीयदि ? ।

**रामः**—( सवैलक्ष्यम् ) प्रिये ! श्रूयताम् । इह हि—

मायाकृतामपि मृगाक्षि ! मृतिं त्वदीय,

सत्या विदन् न सन्धैव मृतोऽस्मि यस्मात् ।

व्रीडानडस्तदहमेष मृषानुरक्त,

शक्तो न दर्शयितुमात्ममुख पुरस्ते ॥ ८ ॥

---

१ आर्यपुत्र ! कुत्र स वानरराक्षसाना प्राणावसानकर सङ्गर सवृत्त ? ।

२ आर्यपुत्र ! केन कारणेन एष वानरेश्वर जल्पन् निवार्यते ? ।

---

1 यत्र राघव° भा० । 2 °नवानरैरिह रिक्ताद्रय द० । 3 °कचा स्मानी स्वाचनाद्धा भा० । द० । 4 °सदा वञ्जरेन णि° भा० ।

**सीता**—[1]अज्जउत्त ! एसो वि जणो एत्थ समाणावराह ज्जेव ।

**रामः**—(विमृश्य) प्रिये ! कदाचिदस्मदीयमपि कृतविलम्ब शिरस्त्राग्रे तैर्दुरात्मभिर्दर्शितं भविष्यति ।

**सीता**—(सगद्गदम्) [2]अज्जउत्त ! किं तुम्हे तुम्हाण पुरओ पिचरिमि ? । (शिरस्यञ्जलिं बद्ध्वा) णमो पियसहीए तिजडाए, जीए तया तेहिं तेहिं पच्चायणावयणेहिं समस्सासिय समस्सासिय पुणो वि अ अज्जउत्तमुहचन्ददंसणचरी कद म्हि ।

**रामः**—(अन्यतो दर्शयन्)

अस्मिन्निन्दुमुखि ! स्थले छलविदा पुत्रेण लङ्कापते
रसद्ध-[1]धनिबन्धनानि फणिन फूत्कारिणः प्रेषिताः ।
ध्यातायातपतङ्गपुङ्गवभयात्तेषु निगूढं च ते,
निन्दन्तो निजमौलिमण्डनमणिश्रेणीप्रकाश निशि ॥ ९ ॥

(पुनरन्यतो दर्शयन्) प्रिये ! शृणु वाचान्तरम् । इह हि—

दैवात् तत्र जगत्त्रयैकसुभटे दर्पोत्कटेन्द्रद्विप-
क्षोदोन्मादसमेतचेतसि गते मोक्षाय रक्षःपतौ ।
बाष्पैर्बन्धुविपत्तिशोकगलितैः शान्तप्रकोपानल,
क्रन्दन्नेष विभीषण ! सकरुण सास्र व्यधान्मामपि ॥ १० ॥

**लक्ष्मणः**—(राम प्रति) देव !

कारणनिवृत्तोऽपि पुनः प्रकृतिं प्रतिपद्यते जनः स्निग्धः ।
सलिल [2]वह्नेस्तापात् तप्त पुनरेति शीतत्वम् ॥ ११ ॥

**रामः**—(दूरतो दर्शयन्) देवि ! [3]वसुन्धरासम्भवे ! दृश्यतामिदमस्मदीयपूर्वपुरुषस्य सगरचक्रवर्तिनः पूर्तधर्मनिर्माणम् ।

अम्भोधिर्भगवानयं जयति यः कल्पान्ततल्पः हरे
र्यस्त्वेषाकुसुमोपमं पशुपतिर्धत्ते विधुं मूर्द्धनि ।

---

१ आर्यपुत्र ! एषोऽपि जनः अत्र समानापराध एव ।

२ आर्यपुत्र ! किं युष्मान् युष्माकं पुरतः कथयामि ? (?)। नमः प्रियसख्यै त्रिजटायै, यया तदा तैस्तैः प्रलापनावचनैः समाश्वास्य समाश्वास्य पुनरपि आर्यपुत्रमुखचन्द्रदर्शनचरी कृताऽस्मि ।

---

1 °पणोऽतिक भा० । 2 वत मुर्धा पिन° भा० । 3 °स्तापादपास्नमत्यात भा० । 4 वसुधासम्भ° भा० ।

यद्वृत्तामृतहृत्तकारकखलोन्मत्त पति स्वर्गिणा,
यज्ञार्तद्रुमकानने विहरति स्त्रैणेन यज्जन्मना ॥ १२ ॥

तत् प्रणम्यतामस्मै ।

( सीता तथा करोति । )

**विभीषणः**—( रामं प्रति ) देव ! परिभाव्यताम्—

वृद्धस्य वारिधेरस्य पोतेर्ऽच प्रतारितै ।
जनो गृह्णाति धूर्तोऽयमप्यन्त स्थगित वसु । १३ ॥

**रामः**—( स्मृत्वा ) सखे रोहणाधिप ! क्वचिदमर्त्यभावेऽपि मर्त्यधर्मव्यवहारो दृश्यते । तथाहि—

गङ्गा समुद्रदयिता धृता हरेणाऽस्य सोऽप्यधत्त विषम् ।
इत्याततायिभाव परम्परेणोभयोरभवत् ॥ १४ ॥

( समन्तादवलोक्य सीतां प्रति )

जम्बूद्वीपस्याभितो वर्तमानश्चक्राकार सागरोऽयं चकास्ति ।
यत्सम्पृक्ता वाहिनीना प्रवाहा, शोभामन्त सुभ्रु ! निम्नस्वरीणाम् ॥ १५ ॥

**सीता**—( पुरो विलोक्य ) अज्जउत्त ! किं णेद सागरसिरीए सीमतमरिच्छ पिक्खीयदि [1] ।

**रामः**—( दृष्ट्वा )

रक्षोराजस्यायमुत्पातकेतु,
कीर्तिस्थान शाश्वत वीरसेतु ।
त्वद्वक्त्रेन्दुप्रेक्षणानन्दहेतु,
सीते ! साक्षाद् दृश्यते सिन्धुसेतु ॥ १६ ॥

( सीता सेतु प्रणमति । )

**रामः**—देवि ! सम्पादनसमयसमुद्भूतसम्भ्रमस्य तस्य तुषारशिखरिसूनोरवस्थाविशेषमेव सम्भावयामि—

---

१ आर्यपुत्र ! किमिद सागरश्रिया सीमन्तसदृश प्रेक्ष्यते ? ।

---

1 प्रेक्ष्यते भा० ।

क्षिप्तानां जलधिजले प्लवङ्गवृन्दैः,
शैलानां कुलसुहृदां परःशतानाम् ।
प्रत्येकं कुशलकथानुयोगखिन्नः,
मैनाकः श्लथयति नूनमात्मकण्ठम् ॥ १७ ॥

**लक्ष्मणः**—(राम प्रति) आर्य ! स एष दर्शनमात्रपवित्रीकृतत्रिलोकीलोकः सरस्वतीसागरसङ्गमः प्रणम्यताम् इति ।

(सर्वे तथा कुर्वन्ति ।)

**सुग्रीवः**—(विमृश्य) नियतं भगवत्याः पितामहदुहितुः सन्निधानादौर्वे सर्वमपि ज्योतिषि सञ्जग्मे । तथाहि—

स मकराशिरुदञ्चान सरस्वती मीनराशिमती ।
सम्प्रत्युचितमनयोर्मन्ये मिलितं यावदवश्यं ॥ १८ ॥

**विभीषणः**—अपरमप्यहमेव निर्णयामि—
नूनं प्रभूतास्वपि वाहिनीषु, कलिन्दकन्या बहुमन्यतेऽब्धिः ।
यद् भूरिभार्यैर्गृहिभिः सगुणा, कार्या विशेषप्रतिपत्तिपात्रम् ॥ १९ ॥

**रामः**—(सीतां प्रति) स एष महेन्द्रनामा महीधरः पुरतो दृश्यते—
यस्यादिशिखरमाप्लुत्य स पवनसुतो विनायकत्त्यने
यत्रोदाय बिभीषणमानस्थितदानवध्वज पुरः ।
त्वा सन्दर्श्य दशाननोऽप्ययमगा प्राणान् दिशन्ताप्तया
तत्रामुत्र च सङ्गति नरभवतिपन्नश्चपुण्योपचयान ॥ २० ॥

**सीता**—अज्जउत्त ! को एस सपाहणामा पब्बिपवरो ।

**रामः**—देवि ! श्रूयताम्—
तस्याग्रस्थ ममभ्रष्टस्य जटायुषोऽयं,
रे ! तिष्ठ रे ! न भवसीति वच प्रगल्भम् ।
दृष्ट्वा बलेन भवतीं जनकात्मजां तां
स्थापनेगमकुत रामुनिश्चकार ॥ २१ ॥

१ आर्यपुत्र ! क एष सपाहनामा पर्वतवरः ?।

**सीता**—( स्मृत्वा सगद्गदम् ) एसो तस्स महाभायस्स दहरहमहिरिठस्स जाणय-सहिन्दस्स वा ।

**लक्ष्मणः**—( राम प्रति ) परिभाव्यतामित—

किष्किन्ध इत्यभिधया धरणीधरोऽय,
यस्मिन् स वासविरताम नृपिप्रवीर ।
मा चण्डभानुतनुजन्मवरप्रकाण्ड-
शक्तिर्यदीयभुजदण्डबलानुकम्पा ॥ २२ ॥

**रामः**—( मशिर प्रकम्पम ) वत्स ! वचनागोचरस्तस्य वालिन सङ्क्रन्दननन्दनस्य पौरुषप्रकर्ष । तथाहि—

निविडनिपीडननिगडितमुखनाशाश्वासदुःस्थित तस्था ।
स जगत्त्रयी नृचशा कक्षाकुहरे हरेर्यस्य ॥ २३ ॥

**सुग्रीवः**—( राम प्रति सविनयम् ) देव ! सेय प्रत्यासन्ना भवदीयप्रसादसम्पादिता मदीयराजधानी । तदियमिदानीमानीयता प्रमोदातिशय प्राघूर्णकग्रहणव्यपदेशागतस्य देवस्य दर्शनेन ।

**रामः**—( सीता दर्शयन् ) सखे ! किमस्मात्प्रियतराऽपि प्राघूर्णकेन कृतेन न सन्तुष्यति प्रियवयस्य ? ।

( सुग्रीवो लज्जा नाटयति । )

**रामः**—वयस्य ! किमपि प्रार्थनीयमस्ति ।

**सुग्रीवः**—देव ! नियोजनीये जने का नाम प्रार्थना ? । समादिश्यताम् ।

**रामः**—वयस्य ! वनवासे ! मम नाक्तिशापाकनवाच्यतापनोदार्थं तत्सुतस्तदोऽयं युवराजपदेऽभिषेक्तव्य ।

**सुग्रीवः**—देव ! मया भवदभिप्रायमवगच्छता प्रथमतोऽपि समर्थित एवायमर्थ ।

**लक्ष्मणः**—( सीता प्रति ) देवि विदेहराजात्मजे ! सोऽय सुरसुन्दरीसम्भोगसम्मद-सम्पादनकल्पो माल्यवान् नाम पर्वत प्रेक्ष्यते । यत्र पयोदागमसमयस्मरणीयतमे भवद्विरह-विधुरेण देवेन दाशरथिना कि नाम नाऽऽचरितम ? । तथाहि—

१ तात्स्य महाभागाय दशास्यसहाय जनकसहनाय वा ।

1 [illegible] मा० । 2 [illegible] पत्रे १५ टिप्पणी २ । 3 [illegible] मा० ।

आर्येण मोचादलकोमलेन, विमुञ्चता बाष्पजलं सशब्दम् ।
नवाम्बुवाहाऽनुकृतिं कृताऽन्या, तडित्तु न त्वं स्फुरिताऽस्य पार्श्वे ॥ २४॥

**सीता**—( सगद्गदम् ) वत्स ! तए वि ण णिवारिदो दुक्खं वित्थरंतो अज्जउत्तो ? ।

**रामः**—( स्मित्वा ) प्रिये ! का नाम तस्मादस्माकं दुःखनिवारणा ? । यस्य प्रत्युत—

अगाधे त्वद्वियोगाब्धौ लक्ष्मणस्य निमज्जतः ।
हस्तालम्बं पुनर्यच्छन् विसस्मार स्वमप्यहम् ॥ २५ ॥

**सीता**—( दृष्ट्वा ) अज्जउत्त ! को एस विसेसमणोहरो विय अवलोईअदि ।

**रामः**—देवि ! तदिदं पवित्रतरमाश्रमपदम्, यत्र किल बलिच्छलनादनन्तरं स भगवान् वामनमूर्तिः निश्चलरूपस्तप्यमानः स्वयमागत्य दैत्यगुरुणा भृगुपुङ्गवेनैवमुपालब्धः —

स्वामिन्निन्द्रमनुनापते ! गमयता पातालमूलं बलिं,
स्वस्याऽय भवता लघुत्वपदवी स्पष्टीकृता केवलम् ।
यस्मादेष पुरः स्थितेऽर्थिनि जगन्नाथे त्वयि क्षोणिका-
ऽमात्रो सर्वनलज्जया स्वयमधो गन्तुं ततोऽधीच्छति ॥ २६ ॥

**लक्ष्मणः**—( सचमत्कारम् ) अहो ! महती काऽपि तस्य दानवपतेर्दानरसिकता । तथाहि—

कमलाकरकमले बलेरिलामण्डलं तदा ददतः ।
आनन्दाश्रु प्रथमं पपात, दानोदकं पश्चात् ॥ २७ ॥

**सीता**—( दूरादवलोक्य ) अज्जउत्त ! को एस कप्पासरपण्डुरसिहरसहस्सो महागिरी पिक्खीयदि ? ।

**रामः**—प्रिये ! सोऽयं सर्वपर्वतसार्वभौमः पार्वतीपिता हिमवान्नाम । तथाहि—

तावल्लावण्यलक्ष्मीं कलयति मलयस्तावदाविष्करोति
क्रौञ्चश्चेतोहरत्वं हरधरणिधरस्तावदभ्येत्यभिख्याम् ।

---

१ वत्स ! त्वयाऽपि न निवारितं दुःखं विस्तारयन् आर्यपुत्रः ? ।
२ आर्यपुत्र ! क एष विशेषमनोहर इव अवलोक्यते ? ।
३ आर्यपुत्र ! क एष कर्पासरसमहपाण्डुरशिखरसहस्रो महागिरिः प्रेक्ष्यते ? ।

1 दृष्ट्वा दे० । 2 मुदुर्ये भा० । 3 य पग भा० । 4 पवित्रतरपाश्रमाय भा० । 5 ततोऽधीच्छ भा० । 6 यतु दे० । 7 करोतु दे० । 8 स्यत्यमि द० ।

तावद् गर्वं 'सुवर्वक्षितिभृदपि दधात्युद्धतं च विन्ध्य-
स्तावद् धत्ते धराणापतिरतिरुचिरो दृश्यतेऽसौ न यावत् ॥ २८ ॥

**लक्ष्मणः**—आर्य ! स किल तादृशः स्मरशङ्करयोरत्र शैलेन्द्रशिखरे निजनिज-प्रभावाविर्भावः सवृत्तः श्रूयते ।

**रामः**—अथ किम् ? ।

**सुग्रीवः**—(स्मृत्वा सचमत्कारम्) अहह ! शृङ्गारशान्तरसैकनिधानयोरनयोर-निर्वचनीयः कोऽपि शक्तिसौरभातिरेकः । तथाहि—

स श्रेयसे भवतु भालविलोचनान्त-
पातेन यो रतिपतिं कृतवाननङ्गम् ।
सोऽप्यस्तु येन गिरिजाल्यममोघमस्त्रं,
मुक्त्वा कृतः स विभुरर्द्धशरीरशेषः ॥ २९ ॥

**रामः**—(अपवार्य सीतां प्रति)

देवः शिवो जयति वक्षसि दोर्युगेन,
न्यञ्चत्कुचं गिरिजया परिरभ्यमाणः ।
यन्नन्दनन्दनिशिखिनयनेन्दुनाप-
मोदाय पट्टकमिवौषधपिण्डगर्भम् ॥ ३० ॥

(सीता सलज्जा किंचिद् स्मयते ।)

**रामः**—(तुराङ्गरागौरव सहर्षं पुष्पकं प्रति) हे देवयानराज ! किंचिद् दक्षिणत-समुपसर्प, यथा प्रयागतीर्थावलोकनेन सफलीकरोमि निजनेत्रयुगम् इति ।

(सर्वे तथा विमानगतिं नाटयन्ति ।)

**लक्ष्मणः**—(दृष्ट्वा सविमर्शम्) कोऽसौ व्यायतिनमीरमस्मान्मुहुर्मुहुरवलोकयन्न-यो त्वाभिमुखं परिक्रामति ? ।

**विभीषणः** (वीक्ष्योपलक्ष्य च) अथ तावद् दशमुखमित्रस्य मथुराधिपतेर्लवणस्य प्रसादपात्रं कार्पटिकः । (पुनः सवितर्कम्) यथाऽयमेतां दिशमुपसर्पति तथा लवणेनापि नियतमित्र क्वापि गन्तव्यं भवितव्यम् ।

1 सु पूर्व भा० । 2 सुगम्य भा० ।

( ततः प्रविशति यथानिर्दिष्टः कार्पटिकः । )

**कार्पटिकः**—( ऊर्ध्वमवलोकयन् ) कथमेते नु प्राप्ता एव विमानस्थिताः काकुत्स्थप्रभृतयः[1] । तद् यावदमी प्रयागागतौ कनकुतूहलेन विलम्बन्ते तावदहं सत्वरमयोध्यां गत्वा समीहितं साधयामि । ( इति द्रुततरं गच्छति । )

**रामः**—( सुग्रीवविभीषणौ प्रति ) वयस्यौ ! भगवन्तमिह भरद्वाजमुपस्थाय तदनुमताः साकेतसीमानमवतरिष्यामः ।

( इति निष्क्रान्ताः )

**कार्पटिकः**—( विमृश्य ) सोऽहमिदानीं दानवत्वापह्नवार्थमृषिकुमारवेषं करोमि । ( इति तथाकृत्वा पुरो विलोक्य च ) सेयमयोध्यापुरी । ( पुनः सविस्मयम् ) एषा राजन्यसैन्यैरुपरुद्धेव निरीक्ष्यते, तदेतत्कारणमितः समागच्छतः पुरुषादवगच्छामि । ( इति तमुपसर्पति । )

( प्रविश्य )

**पुरुषः**—( पुरो विलोक्य ) अये ! मुनिकुमारक[2] इव भगवन् ! नमस्ते ।

[3]**कार्पटिकः**—स्वस्ति भवते । भद्र ! किंनिमित्तमियं नगरी गरीयसा सैन्यसन्दोहेन परितः परीता सम्प्रति वर्त्तते ? ।

**पुरुषः**—श्रूयताम्—

श्रुत्वा सीताहरणमरणोत्पचितं पक्षिराजा-
　　दार्तिं कर्तुं सपदि भरतः कोणपेन्द्रेण सार्द्धम् ।
राज्ञामाज्ञाप्रवणमनसां प्रेषयामास दूता-
　　नभ्याहृता पुरपरिसरावासिनः सन्ति तेऽमी ॥ ३१ ॥

[3]☞ **कार्पटिकः**—( स्वगतम् ) अहो ! सौहार्दं दाशरथीनाम् ।

**पुरुषः**—किंनिमित्तमिहागमनमुत्सुकतानिवेदितव्याकुलीभावस्य महाभागस्य[4] ? ।←

**कार्पटिकः**—भगवतः कुम्भसम्भवस्याऽऽदेशेन भरतसन्दर्शनार्थम्[5] ।

**पुरुषः**—नायमयोध्यायाम्, किन्तु नन्दिग्रामे । तन्मयैव सह तत्र कुमारसन्दर्शनार्थं गम्यतामिति ।

---

1 °कनविनोदन भा० ।　2 मुनिकुमारक द० ।　3 द्रष्टव्या पत्र १० टिप्पणी २ ।
4 °वञ्चित द० । °वशन भा० ।　5 'सन्दर्शना' द० ।

(उभौ परिक्रामतः।)

**कार्पटिकः**—(सविमर्शमात्मगतम्) निश्चितमसौ राजकुलव्यापृतः, तदिमं वार्तं यामि। (प्रकाशम्) भद्र! का नाम रामलक्ष्मणयोरिह प्रवृत्तिः?।

**पुरुषः**—(सखेदम्) यया द्रोणपर्वताभिवर्तिहनुमन्निवेदितया वार्तया सकलमप्यार्तं रघुराजकुटुम्बकं जीवितसन्देहे वर्तते।

भरतस्तु—

श्रुत्वा लक्ष्मणवक्षो रक्षोराजेन विक्षतं शक्त्या।
निन्दति निजहृत्पिण्डं शतखण्डमजायमानमसौ ॥ ३२ ॥

**कार्पटिकः**—(सोद्वेगमिव) अद्यापि तथैव दुर्दैवदण्डः काकुत्स्थकुलस्योपरि भ्रम्यति?। ततस्ततः?।

**पुरुषः**—अथ देव्यौ कौशल्यासुमित्रे शोकव्याकुलतायत्तचित्ते साकेतात् समागतवत्यौ धैर्यावष्टम्भविरचिताकारसंवरणेन भरतेन प्रतिबोध्य पुनस्तत्रैव प्रेषिते।

**कार्पटिकः**—कैकयराजात्मजाऽपि तत्र समागता?।

**पुरुषः**—नहि नहि।

**कार्पटिकः**—कुतः?।

**पुरुषः**—न खलु रामभद्रप्रवासवासरादारभ्य भरतो निजमातुर्मुखमवलोकते।

**कार्पटिकः**—(सचमत्कारम्) अहो! लोकापवादभीरुता काऽपि दिलीपान्वयस्य।

**पुरुषः**—(पुरो विलोक्य) तदिदं नन्दिग्रामोद्यानम्, यत्रासौ रत्नसिंहासनाधिरोपितरामभद्रपादुकामतः कुशविष्टरोपविष्टो जटावल्कलधारी सुमन्त्रद्वितीयः कुमारो मैत्रावरुणप्रहितेन जानूकर्ण्यनाम्ना मुनिशिष्येण समं सम्भाषमाणोऽस्ति। तदिह प्रविशावः। (इति तथा कुरुतः।)

(ततः प्रविशति यथानिर्दिष्टो भरतः सुमन्त्रो जानूकर्ण्यश्च।)

**भरतः**—(सप्रश्रयं [[1]मुनि] शिष्यं प्रति) ब्रह्मर्षे! किमादिष्टमाराध्यपादैः?।

**जानूकर्ण्यः**—कुमार! किमपि ध्यात्वा[2] भगवानित्यादिदेश—यदद्य भवद्भिर्ल[3]ङ्काभिमुखप्रयाणोन्मुखै[4]रप्यस्मदागमनं यावत् प्रतीक्षणीयम्।

---

1 °साभिधानवर्ति° द०। 2 °समाप्त° भा०। 3 °त्वा मन्त्रमवलोक्यादिष्टम्–यद° भा०।
4 °ङ्कागमनप्रया° द०।

**भरतः**—शिरस्यारोपितेयं कुलगुरोराज्ञा । परं भवताऽपि तथा यतितव्यम् यथा ते तत्रभवन्तस्त्वरितमागत्य मामनुगृह्णन्ति ।

**मुनिशिष्यः**—ओम् ( इत्युक्त्वा निष्क्रान्तः । )

**कार्पटिकः**—( पुरुषं प्रति ) भद्र ! निष्क्रान्तस्तावदयम् । तत् कालक्षेपाक्षममिहायातमावेदय मां कुमाराय । ( इत्युपसर्पतः । )

**पुरुषः**—( भरतं प्रणम्य ) सोऽयमगस्तिमहर्षिप्रेषितो मुनिपुत्रकः किञ्चिदाख्यातुकाम इतो वर्तते ।

**भरतः**—( अनाकर्णितकेन सवितर्कं[1] चिन्तितम् )

व्यावृत्त्य रामभृत्यः स कपिर्लङ्कां गतो भवेद् भूयः ।
तैरौषधैरशल्यः कल्यः स्याल्लक्ष्मणः किन्नु ? ॥ २३ ॥

**पुरुषः**—कथं नावधारितम् ? ( पुनस्तदेव कथयति )

**भरतः**—( श्रुत्वाऽवलोक्य च ) कथमसौ करभको मुनिपुत्रकमेतमुपेनमावेदयति ? ( इति सबहुमानमुपवेशयति । )

**भरतः**—तपोनिधे ! किमसुस्थितमना इव[2] विलोक्यसे ?

**कार्पटिकः**—( सोद्वेगमिव ) कुमार ! कुतः सौस्थ्यमीदृशे दैव[3]दुर्विपाके ! तथापि गुरोरादेशा[4]यत्ततयाऽऽवेदयितुमागतोऽस्मि । श्रूयताम् —

सीताकृते राघवलक्ष्मणाभ्यां, कृत्वा रणं कोणपचक्रवर्ती ।
विमानमारुह्य च पुष्पकाख्यं, पुरीमयोध्यामयमभ्युपैति ॥ २४ ॥

तदिह भवद्भिरवहितैर्भवितव्यम् ।

( सर्वे श्रुत्वा व्याकुलतां नाटयन्ति । )

**भरतः**—( सुमन्त्रं प्रति ) कथमप्रतिविधाय तौ राजपुत्रावागमिष्यति राक्षसाधिपतिः ?

**कार्पटिकः**—( सबाष्पम् ) प्रतिविहितं दुष्टदैवेन ( इत्यधोमुखस्तिष्ठति । )

**सुमन्त्रः**—( सास्रम् ) हन्त ! व्यक्तमावेद्यताम् ।

---

1 °तर्कं चिन्तितम् दे० ।   2 इवावलोक्यसे ? भा० ।   3 दुर्दैवविपाके भा० ।   4 °शात् तदावे° भा० ।

**कार्पटिकः**—तथैवाऽऽस्ते ।

**भरतः**—( बलाद् बाष्पं निगृह्य सुमन्त्रं प्रति ) आर्य ! न ह्यनिष्टमेवंविधाः स्पष्टमावेदयन्ति, शेषं स्वयमभ्यूहनीयम् ।

**सुमन्त्रः**—( सनिर्वेदमाकाशे ) हा कुमारौ रामलक्ष्मणौ ! हा वत्से वैदेहि ! कीदृगवस्था वर्त्तते सम्प्रति युष्माकम् [1] । विश्राणयन्तु पुनरात्मदर्शनं कण्ठगतजीवितस्य जीवलोकस्य ।

**भरतः**—( सावष्टम्भम् ) आर्य ! न खलु विल्पत्सु विधिरनुक्रोशति, तदलमिदानीं विषादेन । ( पुनः करभकं प्रति ) रे त्वमपि मा रोदीः, न हि बाष्पनिपातेन शत्रवः साध्यन्ते । तदानीयतां शरासनम् । गत्वा च निवेद्यतामाहूतायातपार्थिवपरिवृताय शत्रुघ्नाय, यदिहायाति नितरांशी निशाचरपतिः तद् भवद्भिरुद्यतायुधैः सन्नद्धसैन्यैः स्थातव्यम् ।

**पुरुषः**—यदादिशति देवः । ( इत्यभिधाय निष्क्रान्तः । )

**सुमन्त्रः**—हा कुमारौ रामलक्ष्मणौ ! ( इत्यादि पुनः शोचति । )

**कार्पटिकः**—( सुमन्त्रं प्रति ) आर्य ! कृतं शोकावेगेन । यतः —

यस्तादृक् कृतवान् निजाग्रजकृते शोच्यः स किं लक्ष्मणः
स्तद्वृत्तेरुचितं विधाय च निजां रामोऽत्यजद् वाच्यताम् ।
वैदेही तदनु प्रविश्य दहनं मुख्या सतीनामभूत्,

**भरतः**—( स्वं प्रति )

गर्हामर्हति नापरः सति महापापैकपात्रे मयि ॥ ३५ ॥

( पुनः सुमन्त्रं प्रति सावष्टम्भम् ) आर्य ! किमतः परं निरुद्धो विधिरस्माकं करिष्यति [2] ।
यतः —

दैवेन दर्शिता याऽद्य रामलक्ष्मणयोर्गतिः ।
सहान्तःपुरपौराणां सैवास्माकं भविष्यति ॥ ३६ ॥

( प्रविश्य )

**पुरुषः**—तदेतद् धनुः । ( इति समर्प्य ) कुमार ! मन्त्रीकृतसकलसैनिकः कुमार

1 °रवर सु° भा० । 2 °पयत पुन° भा० । 3 °शावेशेन द० । 4 °रनायत कृ° द० ।

शत्रुघ्न श्रुताऽपत्यवार्ते देव्यो कौशल्यासुमित्रे कृतकृशानुप्रवेशनिश्चये प्रतिबोधयितु सरयूः गरित प्रतिष्ठमानोऽस्मि ।

**भरतः**—( सर्वैरक्ष्य श्रुत्वा सुमन्त्र प्रति ) आर्य ! सकलमपि तावद् दिलीपकुल मेकेनैव पथा गमयितुमारब्धमधुना दुर्दैवेन । ( पुन सावष्टम्भम् ) भवतु । को विरोध ? । ( इति चापमारोपयति । )

**कार्पटिकः**—( सहर्षमात्मगतम् ) साधित म्यात्मसमीहितम् । रामसमागमनसमयश्च प्रत्यासन्न तद् गच्छामीति । ( प्रकाशम् ) कुमार ! नाव परमहमालोकितुमुत्सहे । ( इत्युक्त्वा निष्क्रान्त । )

( तत प्रविशन्ति विमानस्थिता रामभद्रादय । )

**रामः**—( दूरादवलोक्य सहर्षम् ) वत्स लक्ष्मण ! सेय भगवती महाराजान्वय राजधानी सरयूसलिलपवित्रीकृतपरिसरा पुर प्रेक्ष्यते । तत् प्रणम्यतामियम् ।

( सर्वे प्रणमन्ति )

**लक्ष्मणः**—आर्य ! चिरकालविलोकिताऽप्यमो नगरी तातमन्तरेण न तथा प्रमोदमुपाजयति ।

**रामः**—( स्मृत्वा सगद्गदम् ) वत्स ! नमस्तस्मै निरवमात्मन्यनते सुतामिनाय महाराजाय । तथाहि—

भग्न धनुस्त्रिनयनस्य यथाऽर्हवणा
आकर्ण्य तत् प्रमदगद्गदया गिरा य ।
अन्त पुर स्वयमुपेत्य मदीयमातु
देव्या पुर सरभस कथयाञ्चकार ॥ २७ ॥

**सुग्रीवः**—( समन्तादवलोक्य साश्चर्यम् ) कथमवो याया परित मन्दानि सैन्यानीव विरोक्यन्ते ? । तथाहि—

यद्दानां निरर्गैगैध करिणा चूर्णे म्यानां तथा,
पत्तीनामपि पद्धतिभिस्त्नमिद नोर्वीतल लक्ष्यते ।

1 सचिवैन्तु सर्वो' दे० । 2 "मरथा गान" ख० 3 सर्वे महाराजा" म० । 4 "नाहित
प म० ।

कल्पान्तोद्धतमेघगर्जितमहाऽपस्मारनिस्मारिण ,
निर्घोते रचयन्ति निर्म्मर्यरव भेरीरवा भेग्रा ॥ ३८ ॥

तत् किमेतत्[1] इति ।

( सर्वे साश्चर्यमालोकयन्ति । )

**विभीषणः**—( स्मृत्वा सचमत्कार राम प्रति ) यथा स कार्पटिकनामा लवणप्रणिधिरयोध्याभिमुख गच्छन्नवलोकित, तथा तन्नाथेन नियतमिमा पुरीमुपरुद्धामह सम्भावयामि ।

**रामः**—( [3]विमृश्य ) । तदेतदुपपद्यत एव, पर व मशत्रुघ्ने पुरीपालननिघ्ने कुतो लवणविस्रम्भ्यासशङ्का[?] ।

**सौमित्रिः**—सरयूसो ( पुन सरयूतटमवलोक्य साशङ्कम् ) कथमेते मातरौ नहि प्रवेशाभिमुखे इतो निरोक्ष्येते[?] । तत्र युगल च मयोर्भरतशत्रु घ्नयोरिति ।

( सर्वेऽपि विशेषव्याकुलता नाटयन्ति । )

**सीता**—( दट्ठूण सभयम् ) भअवदीओ रहुकुलदेवदाओ[1] तुम्हाण पसाएण दसरहसुआण दुरिदमन्तरीयदु ।

( राम सीदति । )

**सर्वे**—सम्यगिदमवगमिष्याम । ( इति विमानाग्रत परिक्रामन्ति । )

**विभीषणः**—( राम प्रति ) देव ! सोऽयमस्माक चिरपरिचित सपरिवारो मथुराधिपति, तदेनमुपलक्षयामि । ( इति गदामादायोत्थित सर्वत पश्यति । )

**भरतः**—( ऊर्ध्वमवलोक्य ससम्भ्रमम् ) आर्य सुमन्त्र ! तदिदं विमानम् । अय च राक्षसाधिपतिरिहाऽऽगच्छति । तदिदानीमवलोक्यतामस्मदीयमाचरितम् । ( इति धनुषि शर धत्ते । )

**विभीषणः**—( दृष्ट्वा ) कोऽसौ जटावल्कलधारी तपोधनो धनुष्पाणि सक्रोध इव मुहुर्मुहुरस्मानवलोकयति[?] । भवतु । इत एनमवगच्छामि । ( इति विमानेनोपसर्पति । )

**सुमन्त्रः**—कुमार ! नियत भगवता मैत्रावरुणेन राक्षसपतेरागमनमवगच्छता लङ्कागमनार्थं मन्थरीकृतो भवान् ।

१ भगवत्यो रघुकुलदेवता ! युष्माक प्रसादेन दशरथसुतानां दुरितमन्तरायताम् ।

1 °यमर भ° भा० । 2 °श्चयमवलो° भा० । 3 ( विमृशति ) दे० । 4 °व रोऽपि मथुराधिपति , तावत् तमुप दे० । 5 एव ग° भा० ।

**भरतः**—किमपरिज्ञातमात्मदशाम् ? ।

**विभीषणः**—(समीपमुपेत्य भरतं प्रति) भोस्तपोधन ! किमर्थोऽयं व्रतचर्याविरुद्धो धनुःपरिग्रहः ? ।

**भरतः**—(सावेशम्) राक्षस ! क्षणमत्रैव तिष्ठ। सुष्ठु यथा तत्त्वयाऽऽक्षेप निक्षेप धनुर्धारणकारणमिति।

**विभीषणः**—(दृष्ट्वा साश्चर्यम्) कथमयमस्मरणे मां प्रतिनिहीर्षति ?। (इति गदां दर्शयन्)

तपस्विनि त्वं पूर्वमस्त्रं मुञ्चामि तु त्वयि ? ।
युद्धे यद् दु सहत्वस्य साक्षिणौ रामलक्ष्मणौ ॥ ३९ ॥

**भरतः**—(पुनः सावेशम्) आः ! किं ब्रूवे ? "युद्धे यद् दु सहत्वस्य साक्षिणौ रामलक्ष्मणौ" तदिदानीमनुभवत्वस्य कर्मणः फलम्। (इति बाणं मोक्तुमिच्छति।)

(प्रविश्य)

**वसिष्ठः**- (भरतं प्रति) वत्स ! कृतं कृतमनेन निर्बन्धेन। मुच्यतां चापम्। आदीयतामर्घपात्रम्। दिष्ट्या स एव विमानाधिरूढो रामभद्रः कुशली सीतालक्ष्मणाभ्यां सह सम्प्राप्तः। अयं च राक्षसाधिपतिर्विभीषणः। कपीश्वरः सुग्रीवश्चायम् (इति दर्शयति।)

**भरतः**—(वसिष्ठं प्रणम्य सानन्दम्) भगवन् ! भवदाननेन्दुविनिर्गतेन रघुकुलकुशलप्रवृत्तिपीयूषप्रवाहेन पुनरुज्जीविताः स्मः। (नेपथ्याभिमुखमवलोक्य) कस्कोऽत्र भोः ?, समानीयतामर्घपात्रम्।

(प्रविश्य)

**पुरुषः**—देव ! तदेतत्। (इत्यर्घपात्रं उपनीय धनुरादाय निष्क्रान्तः।)

**सुमन्त्रः**—(सहर्षम्) करभक ! सत्वरमिहाऽऽनय देव्यौ शत्रुघ्नं च।

**करभकः**—यदादिशति आर्यः। (इत्युक्त्वा द्रुतं निष्क्रान्तः)

**विभीषणः**—(सविस्मयं वीक्ष्य रामं प्रति) देव ! परिभाव्यतामितः। कोऽप्यसौ तापसश्चापकोपौ परित्यज्य सप्रमोदमर्घपात्रं पुरस्कुर्वन्नस्माकमभिमुखमभ्येति।

**लक्ष्मणः**—(उत्थायावलोक्य च सहर्षं रामं प्रति) देव ! देव ! दिष्ट्या वर्धसे।

---

1 (सामर्षम्) मा०। 2 °दुदानवि° दे०। 3 °णति दर दे०।

सोऽयमार्यो भरत सार्धपाणिर्भगवन्त वशिष्ठ[1]मग्रेकृत्य भवन्तमभ्युत्तिष्ठति ।

**रामः**—( श्रुत्वा सानन्दविस्मयम् ) वत्स लक्ष्मण !

इत कृतचिते देव्यानिन सर्वार्मिता चमू ।
इतश्च भरत प्रीत्या समभ्येतीति को विधि ? ॥ ४० ॥

भवतु, सर्वमिदानीं व्यक्तीभविष्यति । ( इति सर्वे विमानावतरण नाटयन्ति । )

**भरतः**—( सरभस राममुपेत्य ) देव ! सोऽयमगृहीतदुःखसविभागो भरत प्रणमति ।

**रामः**—( सरभस भरतमुत्थाप्याऽऽलिङ्गय च वशिष्ठ प्रति ) भगवन् ! अयमचरमो दाशरथि प्रणमति ।

**वशिष्ठः**— वत्स ! कल्याणभाजन भव । ( सीता दूरस्था[2] प्रणमन्ता प्रति ) वत्से ! चिरकालमविधवा[3] वीरप्रसविनी च भूया । ( लक्ष्मणविभीषणसुग्रीवाश्च प्रणमत प्रति ) वत्सा ! विजयध्वमिति ।

( सर्वे यथोचित समुदाचरन्तो हर्षाश्रुपातमभिनयन्ति । )

**रामः**—( सुमन्त्र प्रति ) आर्य ! कथय, कथमेष सैन्यविन्यास ? कथ देव्योरय परुपक्रम ? ।

**सुमन्त्रः**—देव ! [4]सम्पातिप्रतिपादितसीतापहारप्रवृत्तिना कुमारभरतेन निवेदित भवदत्याहितमाकर्ण्य देव्योरयमनुचितारम्भ ।

**विभीषणः**—( विमृश्य ) निश्चित तस्यैव कार्पटिकस्य दुर्नाटकमेतत् ।

( प्रविश्य )

**करभकः**—( राम प्रणम्य ) स्वामिन् ! इमे देव्यौ कौशल्यासुमित्रे कुमारशत्रुघ्नेन विनिर्दिश्यमानमार्गे सानन्दौत्सुक्यमित समागच्छत ।

**रामः**—( ससम्भ्रमम् ) कथ देव्यौ स्वयमिहाऽऽगच्छत ? । तदुपसर्पामि । ( इति तथा करोति । )

( तत प्रविशन्ति प्रमोदातिशयमभिनयन्त्यौ कौशल्यासुमित्रे शत्रुघ्नश्च । )

---

1 °ष्ठ पुरस्कृत्य भा० । 2 दूरस्थिता प्र° भा० । 3 °वा पुत्रप्र° भा० । 4 सम्प्रति प्राप्त° दे० ।

**कौशल्या**—( रामलक्ष्मणौ निरीक्ष्य सुमित्रां प्रति ) [1]सहि सुमित्ते ! चिरयालदो वि एदाण पुत्तयाणं मुहयदमाणदवाप्पप्पवाहपिहिदलोयणाण खु फुड पिक्खामि ।

**सुमित्रा**—[2]देवि ! अह वि त्ति ।

( उभे परिक्रामत । )

**रामः**—( सरभसमुपेत्य ) अम्ब ! प्रणमामि । ( इति कौशल्यां प्रणम्य सुमित्रां प्रणमति । )

( लक्ष्मणोऽपि तथाकरोति । )

**देव्यौ**—( पुत्रावालिङ्गय शिरस्याघ्राय च ) [3]पुत्तय ! तुम्हाण सव्वाण वि सुह सजोयरमणिज्ज चिरयाल जीविद भोदु ।

( सीताऽपि समेत्य नामग्रहणार्थं बाष्पमुत्सृजन्ती देव्यौ प्रणमति । )

**देव्यौ**—( सीतामालिङ्गय ) [4]वच्छे ! वीरजणणी होधि ।

**सुग्रीवविभीषणौ**—( दृष्ट्वा ) नियतमेते रामलक्ष्मणजनन्यौ । ( उपेत्य प्रणमत । )

( देव्यौ सविस्मयमालोकेते । )

**रामः**—( सुग्रीवं दर्शयन् )

[ ,

।

( विभीषणं दर्शयन् ) ]

नक्तञ्चराधिपतिरेष बभूव भूयो,

मन्दोदरीदयितविक्रमबद्धसेतु ॥ ४१ ॥

**देव्यौ**—( सहर्षम् ) [5]परमेसरस्स सहस्सरस्सिणो पसाएण अम्हेहिं दुवेहिं अहिणव पुत्तजुअल समासादिद । ता एद पि सुहसपत्तिजुत्त चिरयाल नन्ददु ।

---

१ सखि सुमित्रे ! चिरकालादपि एतयो पुत्रयो मुखचन्द्रमान दबाष्पप्रवाहपिहित लोचनयो खलु स्फुट पश्यामि ।

२ देवि ! अहमपि इति ।

३ पुत्रक ! युष्माक सर्वेषामपि सुखसयोगरमणीय चिरकाल जीवित भवतु ।

४ वत्से ! वीरजननी भव ।

५ परमेश्वरस्य सहस्ररश्मे प्रसादेन आवाभ्या द्वाभ्या अभिनव पुत्रयुगल समासादितम् । तदेतदपि सुखसम्पत्तियुक्त चिरकाल नन्दतु ।

( भरतशत्रुघ्नावपि तयो. प्रणामं कुरुत । )

**वशिष्ठः**—( रामं प्रति ) वत्स ! राज्याभिषेकाय मङ्गलमुहूर्तो वर्त्तते । तदेतदलङ्क्रियता भद्रासनम् ।

**रामः**—आदेश प्रमाणमिति ।

**वशिष्ठः**—( नेपथ्याभिमुखमवलोक्य ) कःकोऽत्र भो !?। समानीयतामभिषेकसम्भारः ।

( प्रविश्य मङ्गलकलशहस्तः )

**जानूकर्ण्यः**—भगवन् ! अयमुपादीयताम् ।

( वशिष्ठ. कलशमादाय रामस्याभिषेकं करोति । )

( आकाशे देवदुन्दुभिध्वनिः पुष्पवृष्टिश्च । )

**सुमन्त्रः**—( सानन्दमूर्ध्वमवलोक्य ) कथमसौ वैमानिकलोको रामराज्याभिषेकमहोत्सवानन्दमाविष्करोति ! ।

**रामः**—( भरतं प्रति सोपरोधम् ) वत्स ! चिरकालादनुरायकृशानुसन्तप्ता मध्यमाम्बामात्मीयमुखेन्दुदर्शनेन निर्वापयितुमर्हसि । ( इति वशिष्ठमुखमुदीक्षते । )

( भरत सलज्जमधोमुखस्तिष्ठति । )

**वशिष्ठः**—वत्स ! नातिक्रमणीयोऽयं राजादेश. ।

( राम भरतं करे गृहीत्वोत्थातुमिच्छति । )

[[1] . . ... ... ... ]

**वशिष्ठः**—( राम प्रति ) वत्स ! कथय किं ते भूय प्रियमनुकरोमि ? ।

**रामः**—( सप्रश्रयमञ्जलिं बद्ध्वा ) भगवन् भास्करान्वयसौवस्तिक !

तीर्णे क्लेशार्णवे सोऽय नावेव भवदाशिषा ।
स्वजनै सङ्गतिश्चाभूदस्तु मे किमत परम् ? ॥ ४२ ॥

**[ वशिष्ठः ]** तथाऽपीदमस्तु—

राजानो जनयन्तु कीर्त्तिकुमुदैरामोदिनीं मेदिनीं,
भूदेवाश्च तदापदामपनुदे वह्नौ वषट् कुर्वताम् ।

---

1 अत्रान्तरे कियाश्चित् सन्दर्भस्त्रुटित सम्भाव्यते ।

वक्त्राम्भोरुहरङ्गभूमिविहरद्वाग्देवतामक्षरं,
श्रीरुत्सृज्य करोतु तेषु च रतिं मत्तेभविभ्राजिनी ॥ ४३ ॥

( इति निष्क्रान्ताः सर्वे । )

॥ अष्टमोऽङ्कः समाप्तः ॥ छ ॥

। समाप्तमिदं उल्लाघराघवं नाम नाटकम् ॥ कृतिः श्रीसोमेश्वरदेवस्य ॥

☞ [1]अम्भोजसम्भवसुता वक्त्राम्भोजेऽस्ति वस्तुपालस्य ।
यद्वीणारणितानि श्रूयन्ते सूक्तिदम्भेन ॥ १ ॥

[ प्रशस्ति ]

आसीद् भूमी ..ऽरो गूर्जराणां, पूजापात्रं श्रीकुमारः पुरोधाः ।
यः प्राकारः पुण्यसंरक्षणार्थं, विप्राकारः कल्पितो वेधसाऽत्र ॥ १ ॥

स कर्माणि च षड् गुणांश्च तनुते तद्भूर्भुवःस्वस्त्रयं,
कीर्तिर्यस्य वराम्यनिर्भरहचिर्नो जातुचिन्मुञ्चति ।
शस्त्राविष्कृतिरध्वरे च युधि च श्लाघ्योज्जिहीते यतः,
सूत्रं यस्य हृदि स्फुरत्यविरतं ब्राह्मं च राज्यस्य च ॥ २ ॥

अरुन्धतीव कान्ताऽस्य पत्युराज्ञामरुन्धती ।
अभूत्रमि( [1]भी ) यया लक्ष्मी साक्षाल्लक्ष्मीरिव क्षितौ ॥ ३ ॥

तदङ्गजः स्नाप्रजरत्कुमारमयुक्तया प्रार्थनया प्रयुक्तः ।
चकार सोमेश्वरदेवनामा, स( [1]रा )मायणं नाटकमप्यमेतत् ॥ ४ ॥

प्रायो यत्र वेदविचारपारगस्यैन नाघेन तथाभियुक्ता ।
दुर्गेऽत्र मार्गे तदपि प्रवृत्ता, नोपेक्षणीया कविभिस्तु अस्त ॥ ५ ॥ ←

---

1 हस्तचिह्नान्तर्गतोऽयं प्रशस्त्यन्तर्गतो ग्रन्थसन्दर्भ ई० प्रतौ नास्ति ।

# पद्यानां सूची